# आनन्दाश्रमसंस्कृतग्रन्थावलिः




ग्रन्थाङ्कः ४०

# संध्याभाष्यसमुच्चयः ।

अत्र

(१) खण्डदीक्षितविरचिता बह्वृचसंध्यामन्त्रार्थदीपिका प्रभाख्यव्याख्या-
समेता, (२) बह्वृचसंध्यापद्धतिभाष्यम्, (३) मध्वमतानुयायिमध्वा-
चार्यविरचितबह्वृचसंध्याभाष्यम्(संध्यामन्त्रवृत्तिः), (४)श्रीकृ-
ष्णपण्डितविरचिततैत्तिरीयसंध्याभाष्यं सपरिशिष्टम्,
(५) भट्टोजीदीक्षितविरचितं तैत्तिरीयसं-
ध्याभाष्यम्, (६) सायणाचार्यकृततै-
त्तिरीयसंध्यामन्त्रव्याख्या च,
इत्येतानि संगृहीतानि ।

204

एतत्पुस्तकं
वे० शा० रा० 'काशीनाथ शास्त्री आगाशे'
इत्येतैः संशोधितम् ।

तच्च

हरि नारायण आपटे
इत्यनेन
पुण्यपत्तनस्थानन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।




शालिवाहनशकाब्दाः १८[illegible]
खिस्ताब्दाः १८९९



मूल्यं रूपकद्वयम् ( रु० २ )

# आदर्शपुस्तकोल्लेखपत्रिका ।

अथ संध्याव्याख्यानपुस्तकानि येभ्यो मिलितानि तेषां नामग्रामादिकं पुस्तकवर्णनं च संक्षेपतः प्रदर्श्यते ।

१ खण्डराजदीक्षितविरचिता बह्वृचसंध्यामन्त्रार्थदीपिका स्वकृतमभाख्यव्याख्यासमेता। इदं पुस्तकं संपूर्णम्, इन्दूरपुरनिवासिनां रा० रा० "किबे" इत्युपाह्वानां 'भाऊसाहेब बाळासाहेब' इत्येतेषाम् ।

२ बह्वृचसंध्यापद्धतिभाष्यम् । इदं पुस्तकं संपूर्णम्, इन्दूरपुरनिवासिनां रा० रा० "किबे" इत्युपाह्वानां 'भाऊसाहेब बाळासाहेब' इत्येतेषाम् ।

३ मध्वाचार्यविरचितं बह्वृचसंध्याभाष्यम् ( संध्यामन्त्रवृत्तिः ) । इदं पुस्तकं संपूर्णम्, पुण्यपत्तननिवासिनां "देव" इत्युपाह्वानां वे० शा० रा० 'बाळशास्त्री' इत्येषाम् । लेखनकालः—शके १६९८

४ श्रीकृष्णपण्डितविरचितं तैत्तिरीयसंध्याभाष्यम् । इदं पुस्तकं संपूर्णम्, अलीबागनिवासिनां बिवलकरोपाह्वानां श्रीमतां 'भाऊसाहेब' इत्येतेषाम् । लेखनकालः—संवत् १७३४ ।

५ भट्टोजीदीक्षितविरचितं तैत्तिरीयसंध्याभाष्यम् । इदं पुस्तकं संपूर्णम्, आनन्दाश्रमपुस्तकालयस्थम् ।

६ तैत्तिरीयसंध्याभाष्यम्* । इदं पुस्तकं संपूर्णम्, आनन्दाश्रमस्थपुस्तकालयस्थम् ।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।

ॐ तत्सद्ब्रह्मणे नमः ।

## खण्डराजदीक्षितविरचिता

# बह्वृचसंध्यामन्त्रार्थदीपिका ।

### स्वकृतप्रभाख्यटीकासमेता ।

प्रणम्य परमात्मानं सुखैर्मन्त्रार्थलब्धये ।
खण्डराजः प्रतनुते संध्यामन्त्रार्थदीपिकाम् ॥ १ ॥

**ॐ भूः, ॐ भुवः, ॐ स्वः, ॐ महः, ॐ जनः, ॐ तपः, ॐ सत्यम् ।**

सप्तव्याहृतिषु प्रोक्तः प्रणवोऽयं पुनः पुनः ।
सप्तानामपि लोकानां वक्ति ब्रह्मस्वरूपताम् ॥ २ ॥
उपलक्षणतः सप्तपातालानां तथैव च ।
सर्वलोकस्थजीवानां वक्ति ब्रह्मस्वरूपताम् ॥ ३ ॥

प्रभाख्यटीकाप्रारम्भः ।

ॐ प्रणम्य म्हाळसाकान्तं संध्यामन्त्रार्थदीपिकाम् ।
खण्डराजो व्याकुरुते छायारूपेण सन्मुदे ॥ १ ॥
श्रीमाधव प्रभो देवान्ब्राह्मणान्पूजयन्नरीन् ।
दमयंश्चिरजीवी सन्निह राष्ट्रमु धारय ॥ २ ॥
दूरे गच्छतु पापिष्ठो राक्षसो मत्सराभिधः ।
हे पण्डिताः पश्यतेमां संध्यामन्त्रार्थदीपिकाम् ॥ ३ ॥
अर्थज्ञानं विना कर्म न श्रेयःसाधनं यतः ।
अर्थज्ञानं साधनीयं द्विजैः श्रेयोर्थिभिस्ततः ॥ ४ ॥

ॐ भूरिति । भूरादिसप्तव्याहृतिभिः सप्तोर्ध्वलोकाः कथ्यन्ते । उपलक्षणेनातलादयः सप्ताधोलोकाः । समग्रं ब्रह्माण्डं सर्वलोकस्थजीवाश्चो परब्रह्मैव ततो न भिद्यन्त इति ज्ञापयितुं सप्तकृत्व ओंकारप्रयोगः । ओंकारस्य परमात्मत्वे श्रुतिस्मृतयः । "ओमित्येकाक्षरं ब्रह्म" "ओमितीदꣳ सर्वम्" इति श्रुतयः । "ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्" इत्याद्याः स्मृतयः ॥ १ ॥ २ ॥ ३ ॥

* अत्र नत्वा महालसाकान्तमिति शुद्धः पाठः कल्पनीयः ।

ॐ तत्स॑वितुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि। धियो॒ यो नः॑ प्रचो॒दया॑त् ॥ (ऋ० सं० अ० ३ अ० ४ व० १०) म ३। ६२। १०

यः सूर्यः प्रेरयति नो बुद्धीर्दीप्तस्य तस्य वै।
ख्यातं स्वरूपं ध्यायेम सेव्यं पापादिभर्जकम् ॥ ४ ॥

अथ गायत्रीव्याख्या—यः सविता नोऽस्माकं धियो बुद्धिवृत्तीः प्रचोदयात्प्रेरयति तस्येत्यध्याहारः। तस्य सवितुर्जगत्प्रसवितुर्देवस्य दीप्तस्य वरेण्यं सेव्यं भर्गोऽविद्यापापादिभर्जकं तत्प्रसिद्धं स्वरूपं धीमहि ध्यायेम ॥ ४ ॥

ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्।

आपस्तेजस्तथा भूतत्रितयं चोपलक्षणात्।
सुधा वा मुक्तिरमृतं वेदा ब्रह्मपदान्मताः ॥ ५ ॥
भूरादयस्त्रयो लोका आदरात्कथिताः पुनः ॥
एतत्सर्वं ब्रह्मरूपमिति वक्तुं शिरस्यपि ॥ ६ ॥
आदावन्ते च कथित ओंकारः कीदृशः स च।
ब्रह्मस्वरूपेणाऽऽनन्दहेतुत्वात्कथितो रसः ॥ ७ ॥

ओमाप इति। आपोऽब्भूतम्। ज्योतिस्तेजोभूतम्। उपलक्षणेनाऽऽकाशवायुभूमयः। ब्रह्म साङ्गो वेदराशिः। अमृतं सुधा मुक्तिर्वा। भूरादयस्त्रयो लोका आदरात्पुनरुक्ताः। इदं सर्वमों परमात्मैव न ततो भिद्यत इति ज्ञापयितुं गायत्रीशिरस आदावन्ते चोंकारप्रयोगः। ओंकारः कथंभूतो रसः, निखिलजगदानन्दहेतुः। परमात्मस्वरूपत्वात्। तथाच श्रुतिः—" रसो वै सः। रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति " इति ॥ ५ ॥ ६ ॥ ७ ॥

आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन। म॒हे रणा॑य॒ चक्ष॑से ॥ (ऋ. सं. अ. ७ अ. ६ व. ५)

यूयं भवथ पानाद्यैः सुखसंपादिका यतः।
हे आपोऽस्मान्धारयत ख्याता अन्नाद्ये ततः ॥
पूज्याय रमणीयाय आत्मसंदर्शनाय च ॥ ८ ॥

आपो हि ष्ठेति। हे आपो हि यस्मात्कारणाद्या यूयं मयोभुवः स्थ स्नानपानादिना सुखप्रापयित्र्यो भवथ तस्मात्कारणात्ता यूयं नोऽस्मान्दधातन धारयत। कस्मै

प्रयोजनाय, ऊर्जेऽन्नाय। उपलक्षणेन धनादिकाय च। महे पूज्याय रणाय रमणीयाय चक्षस आत्मदर्शनाय च। अन्यथा जीवनं वृथेत्यभिप्रायः ॥ ८ ॥

**यो वः शिवतमो रसस्तस्य भाजयतेह नः।**
**उशतीरिव मातरः ॥** (ऋ० सं० अ० ७ अ० ६ व० ५)

यः कल्याणतमो युष्मद्रसोऽस्ति मधुराह्वयः ॥
तस्यात्र स्थानं कुरुत हे आपोऽस्मान्सुतान्यथा ॥ ९ ॥
कुर्वन्ति मधुरस्थानं मातरो वृद्धिकामुकाः ॥
युष्मद्रसोऽस्मासु भवेत्पात्रे वारिस्थितिर्यथा ॥ १० ॥

यो वः शिवतम इति। हे आपो वो युष्माकं यः शिवतमः कल्याणतमो रसो मधुराख्योऽस्ति तस्येहास्मिँल्लोकेऽस्मान्भाजयत पात्रयत स्थानं कुरुत। यथा भाजने जलं तिष्ठति तथा युष्मद्रसोऽस्मासु तिष्ठत्विति भावः। तत्र दृष्टान्तः—उशतीरुशत्यः पुत्रवृद्धिं कामयमाना मातरो यथा स्वपुत्रानुत्तमदुग्धादिरसपात्रभूतान्कुर्वन्ति तथा कुरुतेति पूर्वेणान्वयः ॥ ९ ॥ १० ॥

**तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ॥**
**आपो जनयथा च नः ॥** (ऋ० सं० अ० ७ अ० ६ व० ५)

युष्मान्गच्छाम नितरां तस्मै पापक्षयाय वै ॥
यूयमस्मान्प्रीणयथ यस्मै पापक्षयाय वै ॥
हे आपोऽस्मांश्च कुरुत पुत्रादिजननेश्वरान् ॥ ११ ॥

तस्मा अरमिति। हे आपो वयमरमलं नितरां वो युष्मांस्तस्मै पापक्षयाय गमाम प्राप्नुयाम। यस्य पापस्य क्षयाय यूयमस्माञ्जिन्वथ प्रीणयथ। किंच भो अब्देवता नोऽस्माञ्जनयथ पुत्रादिजननसमर्थान्कुरुत। तस्मै प्राप्नुयामेति पूर्वेणान्वयः ॥ ११ ॥

**अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम्। यदह्ना पापमकार्षम्। मनसा वाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना। अहस्तदवलुम्पतु। यत्किंच दुरितं मयि। इदमहं माममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥** (आश्व० गृह्यप० अ० १)

पान्तु मन्युकृतेभ्यो मां पापेभ्योऽग्न्यादयः सुराः ।
वाचा च मनसा पद्भ्यां हस्ताभ्यामुदरेण च ॥ १२ ॥
शिश्नेन दिवसे चाहमकार्षं यदघं हि तत् ।
यत्किंचिद्दुरितं चान्यद्दिनदेव्यवलुम्पतु ॥ १३ ॥
इदं पूर्वोक्तदुरितं हव्यस्थानं च मां तथा ।
अहमध्वर्युरूपः सञ्जुहोम्याहवनीयके ॥ १४ ॥
मत्स्थाने चुलकं वेमं मुखाग्नौ मोक्षकारणे ।
अहमध्वर्युरूपः सञ्जुहोमि सुहुतोऽस्मि च ॥ १५ ॥

अग्निश्चेति । अग्निर्मन्युः क्रोधाधिष्ठानदेवता । मन्युपतयः क्रोधाधिष्ठानदेवतानायकाः । चकारादितरे देवाश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां माम् । अह्नाऽहनि मनोवागादिभिर्यत्पापमकार्षं चकार तत्पापमहरभिमानिनी देवताऽवलुम्पतु नाशयतु ॥ अपि च मयि यत्किंच यावत्किमपि दुरितमस्ति, इदं सर्वं निराकृत्याहमध्वर्युरूपः सन्नमृतयोनौ मोक्षकारणे सत्ये ज्योतिष्याहवनीये मामाज्यपुरोडाशादिस्थानीयं जुहोमि स्वाहाऽग्न्यर्थं सुहुतोऽस्मि । यद्वा मत्प्रतिनिधित्वेनेदं चुलकप्रमाणमुदकं मदीयमुखाग्नौ जुहोमि स्वाहा सुहुतोऽस्मि ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

**सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम् । यद्रात्र्या पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । रात्रिस्तदवलुम्पतु । यत्किंच दुरितं मयि । इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥** ( आश्व० गृह्यप० अ० १ )

पान्तु मन्युकृतेभ्यो मां पापेभ्योऽर्कादयः सुराः ।
वाचा च मनसा पद्भ्यां हस्ताभ्यामुदरेण च ॥ १६ ॥
शिश्नेन च निशायां वै यदकार्षमघं हि तत् ।
यत्किंचिद्दुरितं चान्यद्रात्रिदेव्यवलुम्पतु॥ १७ ॥
इदं पूर्वोक्तदुरितं हव्यस्थानं च मां तथा ।
अहमध्वर्युरूपः सञ्जुहोम्याहवनीयके ॥ १८ ॥
मत्स्थाने चुलकं वेमं मुखाग्नौ मोक्षकारणे ।
अहमध्वर्युरूपः सञ्जुहोमि सुहुतोऽस्मि च ॥ १९ ॥

सूर्यश्चेति। सूर्यादयो देवता मन्युकृतेभ्यः पापेभ्यो मां रक्षन्ताम्। रात्र्या रात्रौ यत्पापमकार्षं तत्पापं रात्री रात्र्यभिमानिनी देवताऽवलुम्पतु नाशयतु। सूर्ये ज्योतिषि सूर्यरूप आहवनीये। अन्यत्सर्वमग्निश्चेत्यादिवत् ॥ १६ ॥ १७ ॥ १८ ॥ ॥ १९ ॥

**आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम्। पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम्। यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम। सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं स्वाहा।**

(आ० गृह्यप० अ० १)

मद्धस्तसंस्थिता आपो मम देहं पुनन्तु वै।
कारणाभेदतो ग्राह्यो देहोऽत्र पृथिवीपदात् ॥ २० ॥
मच्छरीरं पावयतु जीवं मद्देहसंस्थितम्।
पुनातु वेदपुरुषो मां वेदपरिपालकः ॥ २१ ॥
नित्यपूतं परं ब्रह्म पवित्रं मां करोतु वै ॥
उच्छिष्टं भुक्तशिष्टं स्याद्बालाद्यैश्च सहाशनम् ॥ २२ ॥
पलाण्ड्वादि च यद्भुक्तमवैधाचरणं च यत्।
अभिशप्तश्च पतितम्लेच्छचण्डालसंकराः ॥ २३ ॥
इत्यादिका असन्तो वै एतदीयं प्रतिग्रहम्।
दूरीकृत्येदमखिलं मामापः पावयन्तु वै।
तदर्थमम्मयं हव्यं जुहोमि वदनानले ॥ २४ ॥

आपः पुनन्त्विति। आपो मद्धस्तसंस्था अनेन मन्त्रेण मन्त्रिताः सत्यः पृथिवीमस्मच्छरीरं पुनन्तु। कार्यकारणयोरभेदात्पृथिवीपदेन देहः। पृथिवी पूता शुद्धमस्मच्छरीरं मां जीवं पुनातु। ब्रह्मणो वेदस्य पतिः पालको वेदपुरुषो मां पुनन्तु पुनातु। वचनव्यत्ययः। किंच ब्रह्म पूता स्त्रीलिङ्गं छान्दसं नित्यपूतं ब्रह्म मां पुनातु। पूर्वमपां देहद्वारा पावनहेतुत्वमुक्तम्। अधुना साक्षादेवोच्यते—आपो हस्तस्थिता उच्छिष्टं भुक्तशिष्टं बालाद्यैः सह भोजनं वा। अभोज्यं पलाण्ड्वादि यद्भुक्तम्। यद्वा दुश्चरितं यच्चावैधाचरणं कृतम्। असतां म्लेच्छादीनां प्रतिग्रहः। एतत्सर्वं दूरीकृत्य मां पुनन्तु। तदर्थमिदमम्मयं हविर्मदीयमुखाहवनीये स्वाहा सुहुतमस्तु त्रिलोकदेवताभ्यः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

आपो हि ष्ठा० । यो वः शिवतमो० । तस्मा अरं गमा० ।

आपो हि ष्ठेति तृचो व्याख्यातः ।

शं नो देवीरभिष्टय आपो भवन्तु पीतये ।
शं योरभिस्रवन्तु नः । (ऋ० सं० अ० ७ अ० ६ व० ५)

अब्देवता दीप्यमानाः सन्त्वस्मभ्यं सुखप्रदाः ।
पानादये त्वभीष्टाय भवन्तु शमनं रुजाम् ॥
भियं च दूरीकरणं यथा स्यात्प्रसरन्तु नः ॥ २५ ॥

शं नो देवीरिति । देवीर्देव्यो दीप्ता आपोऽब्देवता नोऽस्मभ्यं शं सुखप्रदा भवन्तु । किंच—अभिष्टयेऽभीष्टये पीतयेऽभीष्टाय पानादये च भवन्तु । किंचाऽऽपोऽस्मान्प्रति शं रोगाणां शमनं, योर्भयानां यवनं पृथक्करणं यथा भवति तथाऽभिस्रवन्तु सर्वतः प्रवहन्तु ॥ २५ ॥

ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् ॥ (ऋ० सं० अ० ७ अ० ६ व० ५)

निवारणार्हपापानां वारणेशाश्च जन्मिनाम् ।
वासकारणभूता वै याचाम्यब्देवताः प्रति ॥
विमुच्य हृदयग्रन्थिं संसारापहमौषधम् ॥ २६ ॥

ईशाना इति । वार्याणां निवारणयोग्यपापानामीशाना निवारणसमर्थाः, चर्षणीनां प्राणिनां क्षयन्तीर्निवासकारणभूता अपोऽब्देवताः प्रति अहं मार्जनकर्ता भेषजं संसारनिबर्हणमौषधं याचामि ॥ २६ ॥

अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निं च विश्वशंभुवम् ॥ (ऋ० सं० अ० ७ अ० ६ व० ५)

अप्सु मध्ये सन्ति सर्वाण्यौषधानीति मे विधुः ।
अब्रवीत्पावकश्चास्ति विश्वस्याऽऽरोग्यभावकः ॥
अतस्तदुभयं याचाम्यहमब्देवताः प्रति ॥ २७ ॥

अप्सु औषधाभावेन कथं याचसीत्याशङ्क्याऽऽह—अप्सु मे सोम इति । अप्सु अन्तर्मध्ये विश्वानि नानाविधानि भेषजा भेषजानि सन्तीति मे मह्यं सोमश्चन्द्रोऽ-

ब्रवीत्। विश्वशंभुवं विश्वस्याऽऽरोग्यसुखभावकमग्निं चाब्रवीत्। अतस्तदुभयं याचामीति भावः॥ २७॥

आपः पृणीत भेषजं वरूथं तन्वे३ मम।
ज्योक्च सूर्यं दृशे॥ (ऋ० सं० अ० ७ अ० ६ व० ५)

अब्देवता मत्तनवे यूयं पूरयतौषधम्।
संसारनाशकं सर्वप्राणिभिर्वरणार्हकम्॥
चिरं सूर्यं च चन्द्रादि द्रष्टुं पापापनुत्तये॥ २८॥

आपः पृणीतेति। आपो हेऽब्देवता यूयं मम तन्वे मम तनवे भेषजं संसारनिवर्तकमौषधं पृणीत पूरयत। कस्मै प्रयोजनाय ज्योक्चिरकालमुपस्थानादौ सूर्यं चकारेण चन्द्रादिकं च दृशे द्रष्टुं पापापनोदनायेति शेषः॥ २८॥

इदमापः प्रवहत यत्किंच दुरितं मयि। यद्वाऽहमभिदुद्रोह यद्वा शेप उतानृतम्॥

(ऋ० सं० अ० ७ अ० ६ व० ५)

आपो यूयं नाशयत यत्किमप्यस्ति मय्यघम्।
निरागसः प्राणिनो यद्धन्तुमिच्छामि यच्च वा॥
मृषा शपामि चेत्यादि पापं नाशयताखिलम्॥ २९॥

इदमाप इति। हे आपो मयि यत्किंच यत्किमपि दुरितमस्ति, इदं प्रवहत विनाशयत। उतापि चाहमभिदुद्रोह निरागसः प्राणिनो हन्तुमिच्छामि चेति यत्। किंचाहमनृतं मृषा यथा तथा शेपे निरागसः प्राणिनः शपामीति यदिदमपि प्रवहत। वाशब्दः समुच्चये। ज्ञानाज्ञानकृतं सर्वं पापं नाशयतेति भावः॥ २९॥

आपो अद्यान्वचारिषं रसेन समगस्महि। पयस्वानग्न आगहि तं मा संसृज वर्चसा॥

(ऋ० सं० अ० ७ अ० ६ व० ५)

आपो मार्जनवेलायां युष्मान्संगतवानहम्।
युष्मत्सारेणाहमस्मि संगतो मार्जने सति॥ ३०॥
मधुरोदकदुग्धादियुक्त आगच्छ पावक।
संयोजय प्रसिद्धं मां त्वमग्ने ब्रह्मवर्चसा॥ ३१॥

आपो अद्येति । हे आपोऽद्यास्मिन्मार्जनवेळायां युष्मानन्वचारिषमुपचरितवानस्मि । किंच रसेन युष्मदीयसारेण समगस्महि संगतोऽस्मि । वचनव्यत्ययः । मार्जनद्वारा युष्मत्संबन्धः सिद्धः । किंच हेऽग्ने पयस्वान्मधुरोदकक्षीरादिमान्सन्नागहि आगच्छ । आगत्य च तं प्रसिद्धं मां वर्चसा ब्रह्मवर्चसेन संसृज संयोजय । अब्देवतामग्निदेवतां च प्रसाद्य यथाभिलाषसिद्धकामो भविष्यामीति भावः ॥ ३० ॥ ३१ ॥

सस्रुषीस्तदपसो दिवानक्तं च सस्रुषीः । वरेण्यक्रतूरहमा देवीरवसे हुवे ॥ (ऋ० सं० परि०)

क्षरन्तीरमरान्सोमवाजिनादिरसात्मना ।
प्राप्यन्त इत्यपांसीति स्वर्गादीन्युदितानि वै ॥ ३२ ॥
सोमामिक्षादिरूपेण याभ्यः ख्यातान्यपांसि वै ।
दिवानक्तं सरन्तीश्च जाड्याद्यापगात्मना ॥ ३३ ॥
श्रेष्ठा अपि मखा याभिरादिसिद्धा भवन्ति हि ।
ब्रह्मन्नपः प्रणेष्यामीत्यपां प्रणयनं विना ॥ ३४ ॥
न जायते यागसिद्धिर्वरेण्यक्रतवस्ततः ।
अब्देवता आह्वयामि गुप्त्यै दीप्त्यादिसंयुताः ॥ ३५ ॥

सस्रुषीरिति । सस्रुषीः पयोदध्याज्यसांनाय्यसोमादिरूपेण तत्तद्देवताः प्रति सस्रुषीः सरन्तीराप्यन्ते प्राप्यन्ते सुकृतिभिरिति अपांसि स्वर्गादिस्थानानि तानि प्रसिद्धानि अपांसि याभ्यस्तास्तदपसः सोमादिरूपेण स्वर्गाद्युपादानभूता इत्यर्थः । दिवानक्तमहर्निशं भागीरथ्यादिरूपेण सस्रुषीः सरन्तीर्वरेण्याः श्रेष्ठाः क्रतवो याभिर्निष्पाद्यन्ते ता वरेण्यक्रतवः । ता वरेण्यक्रतूः । ब्रह्मन्नपः प्रणेष्यामीत्यादिना प्रयुज्यमानमप्प्रणयनं विना यज्ञक्रत्वनुष्ठानाद्यसिद्धेः । देवीर्दीप्यमाना अब्देवता अहमवसे रक्षणायाऽऽहुव आह्वयामि ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥

(ऋ० सं० अ० ८ अ० ८ व० ४८)

सत्योक्तिः सत्यसंकल्पश्चाभिदीप्तात्परात्मनः ।
आलोचनाख्यतपसोऽनन्तरं समभूज्जगत् ॥
ततो निशा प्रादुरभूदुपलक्षणतो दिनम् ॥ ३६ ॥

पश्चात्प्रादुरभूदब्धिः सप्तभेदसमन्वितः।
जलवत्त्वादर्णवाख्यो वाप्यादिः समजायत ॥ ३७ ॥

ऋतं च सत्यम्। अभीद्धादभिदीप्तात्परमात्मनः सकाशात्तपसोऽधि बहु स्यां प्रजायेयेतिपर्यालोचनाख्यतपसोऽनन्तरमृतं यथार्थभाषणं सत्यं यथार्थसंकल्पनमाकाशादि सर्वं जगत्। ततो रात्री निशा। उपलक्षणेन दिनम्। ततः समुद्रः सप्तधा भिन्न उदधिः। अर्णांसि अम्भांसि विद्यन्तेऽस्मिन्निति अर्णवो वापीतडागादिरजायत ॥ ३६ ॥ ३७ ॥

समुद्रादर्णवादधि संवत्सरो अजायत। अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥

(ऋ० सं० अ० ८ अ० ८ व० ४८)

समुद्रादर्णवात्पश्चादहोरात्राणि धारयन्।
स्वाधीनकर्ता विश्वस्य निमेषोन्मेषकारिणः ॥
स्थावरस्यापि वशकृद्वत्सरः समजायत ॥ ३८ ॥

समुद्रादर्णवादधि अनन्तरं संवत्सरोऽजायत। कथंभूतः, अहोरात्राणि विदधत्कुर्वाणः। पुनः कीदृशो वत्सरः, मिषतो निमेषं कुर्वतः। उपलक्षणमेतत्। अमिषतो नेत्रव्यापारमकुर्वतः स्थावरात्मकस्यापि विश्वस्य वशी स्वाधीनकर्ता ॥३७॥

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥

(ऋ० सं० अ० ८ अ० ८ व० ४८)

अर्कचन्द्रौ भोग्यवस्तु दिवशब्देन भूर्नभः।
स्वर्गं चाधस्तनाँल्लोकानन्यच्चापि चकारतः ॥
पूर्वकल्पानुसारेण परमात्मा चकार वै ॥ ३९ ॥

सूर्याचन्द्रमसाविति। ननु आधाराधेयभावेन विद्यमानं ब्रह्माण्डं परमात्मोत्पादयामासेत्युक्तं तत्कथमाकारमुत्पादयामासेत्यत आह—धाता परमेश्वरः सूर्याचन्द्रमसौ दिवं लोकत्रयस्थं भोग्यजातं पृथिवीमन्तरिक्षं स्वः स्वर्गलोकम्। अथो अध इत्यस्मिन्नर्थे। अधस्ताद्विद्यमानं लोकसप्तकमपि यथापूर्वं पूर्वकल्पानुसारेणाकल्पयदजनयत् ॥ ३९ ॥

ॐ भूर्भु० तत्सवि०।

गायत्री व्याख्याता।

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथि-
र्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा
ऋतजा अद्रिजा ऋतम् ॥

(ऋ० सं० अ० ३ अ० ७ व० १४)

हन्त्यघं खे गच्छति वा ततो हंस इति स्मृतः ।
पुण्यक्षेत्रादिकं याति शुचिषत्तत उच्यते ॥ ४० ॥
वृष्ट्या कान्त्या वासयति जगत्तस्माद्वसुः स्मृतः ।
वायुरूपेणान्तरिक्षं गच्छतीत्यन्तरिक्षसत् ॥ ४१ ॥
होमाधारोऽग्निरूपेण होता तस्माद्रविः स्मृतः ।
अतो वेद्यां सीदतीति वेदिषच्च स गद्यते ॥ ४२ ॥
अमादितिथिराहित्यात्पूज्यत्वाद्वाऽतिथिः स्मृतः ।
विदीर्णत्वाद्धृत्कमलं दुरोणं तत्र वासकृत् ॥ ४३ ॥
नरेषु प्राणरूपेण तिष्ठतीति नृषत्स्मृतः ।
श्रेष्ठस्थानेषु वसति तस्माद्वरसदुच्यते ॥ ४४ ॥
ऋतं यज्ञ ऋतं सत्यमृतसत्तत्र वासतः ।
व्योम्नि चन्द्रादिरूपेण निवासाद्व्योमसत्स्मृतः ॥ ४५ ॥
अप्सु मत्स्यादिरूपेण जातत्वादब्ज उच्यते ।
भूम्यां मर्त्यादिरूपेण जातो गोजास्ततः स्मृतः ॥ ४६ ॥
सत्यात्परात्मनो जात ऋतजास्तत उच्यते ।
पाषाणादिस्वरूपेण गिरौ जातस्ततोऽद्रिजाः ॥
ऋतशब्देनार्घ्यजलमस्त्वेतादृशभानवे ॥ ४७ ॥

हंसः शुचिषत् । हन्ति नभो मण्डलेनाहर्निशं गच्छतीति पापं हन्तीति वा हंसः । शुचौ पुण्यक्षेत्रादौ सीदति गच्छतीति शुचिषत् । वसन्त्यस्मिन्नुदकानि वृष्टिरूपाणीति वसुर्वासयति वृष्टिद्वारा वा जगदिति वसुर्जगन्निवासः । अन्तरिक्षे वाय्वात्मना सीदतीत्यन्तरिक्षसत् । होताऽग्निरूपः । "अग्निर्होता । अश्विनावध्वर्यू" इति श्रुतेः । अतो वेद्यां सीदतीति वेदिषत् । अग्निवाय्वादित्यानामभेदं वाजसनेयिनः समामनन्ति—"अयमग्निरयं वायुरयं वै सर्वे देवाः" इति । न विद्यतेऽमावास्यादितिथिर्यस्मिन्नसावतिथिः । नहि देवानां तिथिवारादिनियमोऽस्ति । तदुत्पादकत्वात्कर्मानधिकाराच्च मनुष्याधिकाराच्छास्त्राणामिति पूर्वतन्त्रोक्तेः । अतिथिवत्पूज्यत्वाद्वाऽतिथिः । लुप्तोपमा । विदीर्णत्वाद्धृत्कमलं दुरोणं तत्र सीदतीति दुरोणसत् । नृषु मनुष्येषु प्राणरूपेण तिष्ठतीति नृषत् ।

वरेषूत्कृष्टस्थानेषु सीदतीति वरसत् । ऋते यज्ञे सत्ये वा सीदतीति ऋतसत् । व्योम्नि चन्द्रनक्षत्ररूपेण सीदतीति व्योमसत् । अद्भ्यो मत्स्यादिरूपेण जायत इत्यब्जाः । गवि पृथिव्यां जायत इति गोजाः । ऋतात्सत्यात्परमात्मनो जायत इति ऋतजाः । अद्रौ पर्वते पाषाणादिरूपेण जायत इति अद्रिजाः । एतादृशाय सूर्याय ऋतमर्घ्य-जलमस्तु ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेनाऽऽ देवो याति भुवनानि पश्यन् ॥

(ऋ० सं० अ० १ अ० ३ व० ६)

आगच्छन्नसकृत्सूर्यः कृष्णेन गगनेन वै ।
संस्थापयन्स्वस्वदेशे मृतिहीनं च तद्युतम् ॥ ४८ ॥
देवं मनुष्यं च यद्वा प्राणं मृतिविवर्जितम् ।
मृतियुक्तं शरीरं च स्वस्वकार्ये नियोजयन् ॥ ४९ ॥
प्रकाशयन्सर्वलोकान्सौवर्णेन रथेन वै ।
अस्मत्समीपमायाति दानादिगुणसंयुतः ॥ ५० ॥

आ कृष्णेनेति । कृष्णेन कृष्णवर्णेन रजसाऽन्तरिक्षलोकेन "लोका रजांसि" इति निरुक्तम् । आवर्तमानोऽसकृदागच्छन् । अमृतं मरणरहितं देवं मर्त्यं मरण-सहितं मनुष्यं च निवेशयन्स्वस्वदेशे स्थापयन् । यद्वाऽमृतं मरणरहितं प्राणम् । मर्त्यं मृतियुक्तं शरीरं च निवेशयन्स्वस्वकार्ये नियोजयन् । भुवनानि प्रकाशयन्स-विता हिरण्ययेन हिरण्मयेन रथेनाऽऽयाति अस्मत्समीपमागच्छति ॥ ४८ ॥ ॥ ४९ ॥ ५० ॥

आयातु वरदा देवी अक्षरं ब्रह्म संमितम् । गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व मे ॥

(तै० आ० प्र० १० अ० ३४)

दीप्त्यादियुक्ता गायत्री देवता वरदा सती ॥ ५१ ॥
अस्मद्धृदयमायातु सूर्यमण्डलसंस्थिता ।
अनश्वरं हि यद्ब्रह्म वेदान्तैः सुनिरूपितम् ॥ ५२ ॥
निरूपयन्ती तद्ब्रह्म वेदानां जननी च सा ।
मदीयहृत्पङ्कजस्थं परं ब्रह्म प्रतोषयेत् ॥ ५३ ॥

आयातु वरदेति। वरदा वाञ्छितप्रदा देवी दीप्त्यादियुक्ता । किंच अक्षरं विनाशरहितं संमितं वेदान्तैः सम्यङ्निरूपितं यद्ब्रह्म तन्निरूपयन्तीत्यध्याहारः। गायत्र्यायातु आदित्यमण्डलादस्मद्धृदयं प्रति आयातु । कीदृशी छन्दसां वेदानां माता। एतादृशी गायत्री देवता माता मे मम हृदयकमलस्थमिदं प्रत्यक्षं परं ब्रह्म जुषस्व पुरुषव्यत्ययः । जुषतां प्रीणयतु । गायत्र्या प्रीतं ब्रह्म मम सुखप्रदं भवत्वित्यर्थः ॥ ५१ ॥ ५२ ॥ ५३ ॥

यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते ।
यद्रात्रियात्कुरुते पापं तद्रात्रियात्प्रतिमुच्यते ॥

( तै० आ० प्र० १० अ० ३४ )

त्वद्भक्तो देवि कुरुते यद्दिने पातकं नरः ।
तस्मिन्नेव दिने तेन पापेन प्रतिमुच्यते ॥ ५४ ॥
त्वद्भक्तो देवि कुरुते यद्रात्र्यां पातकं नरः ।
तद्रात्र्यामेव पापेन तेन स प्रतिमुच्यते ॥ ५५ ॥

यदह्नात्कुरुत इति। हे गायत्रि त्वद्भक्तो यदह्नाद्यस्मिन्नहनि पापं कुरुते तदह्नात्तस्मिन्नहनि तेन पापेन प्रतिमुच्यते। शुद्धो भूयादिति भावः । यद्रात्रिया-द्यस्यां रात्र्यां पापं कुरुते तस्यां रात्र्यां तेन पापेन प्रतिमुच्यते विमुच्यते । एते छान्दसाः प्रयोगाः ॥ ५४ ॥ ५५ ॥

सर्ववर्णे महादेवि संध्याविद्ये सरस्वति ।

( तै० आ० प्र० १० अ० ३४ )

ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि
देवानां धामनामाऽसि विश्वमसि विश्वायुः
सर्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि
सावित्रीमावाहयामि सरस्वतीमावाहयामि
छन्दर्षीनावाहयामि श्रियमावाहयामि गाय-
त्रिया गायत्री च्छन्दो विश्वामित्र ऋषिः सविता

देवताऽग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयꣳ रुद्रः शिखा पृथिवी योनिः प्राणापानव्यानोदानसमाना सप्राणा श्वेतवर्णा सांख्यायनसगोत्रा गायत्री चतुर्विꣳशत्यक्षरा त्रिपदा षट्कुक्षिः पञ्चशीर्षोपनयने विनियोगः ॥

(तै० आ० प्र० १० अ० ३५)

कामरूपे महादेवि संध्यानुष्ठानरूपिणि ।
सरस्वतिस्वरूपे त्वमोजः कान्तिस्तयाऽन्विता ॥ ५६ ॥
शत्रुनाशः सहः प्रोक्तं तद्युक्ता च बलान्विता ।
भ्राजोऽतिदीप्तिस्तद्युक्ता स्थानं दिविषदामसि ॥ ५७ ॥
पूर्वोक्तार्थः समग्रोऽपि प्रसिद्धो नामशब्दतः ।
जगत्त्वमसि गायत्रि त्वमायुर्जगतोऽसि च ॥ ५८ ॥
उक्तमेवोच्यते स्पष्टीकरणाय पदान्तरैः ।
अभितः सर्वभूतानि भवन्त्यस्या अतोऽभिभूः ॥ ५९ ॥

सर्ववर्ण इति । अपि च हे सर्ववर्णे हे कामरूपिणि महादेवि देवताश्रेष्ठे हे संध्याविद्ये संध्यानुष्ठानरूपिणि हे सरस्वति त्वमोजः कान्तिरूपाऽसि ओजस्विनीत्यर्थः । सर्वत्र लिङ्गव्यत्ययः । सहोऽसि सहस्विनी शत्रुविनाशनीत्यर्थः । बलमसि बलवती भ्राजोऽतिदीप्तिस्तद्वती त्वमसि, देवानामिन्द्रादीनां धाम स्थानमसि । देवा स्त्वयि तिष्ठन्तीति भावः । हे गायत्रि त्वमेवंविधाऽस्मान्रक्षेति भावः । नामशब्दः पूर्वोक्तार्थसिद्धिद्योतकः । अत एव त्वं विश्वं सर्वं जगदसि । विश्वायुः सर्वजगज्जीवनकालोऽसि । सर्वमसि सर्वायुरिति पूर्वपदद्वयस्य स्पष्टीकरणार्थम् । अभितो भवन्ति भूतानि यस्याः सकाशात्साऽभिभूः । गायत्रीमावाहयामीत्यादि । [स्पष्टम्]। गायत्रीजपः ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥

जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः । (ऋ० सं० अ० १ अ० ७ व० ७)

जातद्रव्याय वा जातज्ञानाय वयमग्नये ।
सोमाख्यामोषधिं कुर्मोऽभिषुतां यज्ञकर्मणि ॥ ६० ॥

सर्वज्ञोऽग्निर्वेदशब्दाज्जनाञ्शत्रुत्वमिच्छतः ।
नितरां दहतादस्मदघानि सकलानि सः ॥ ६१ ॥
विनाशयत्त्वशक्यानि दुःखेनापि विनाशितुम् ।
पारं जिगमिषून्पारं यथा नयति नाविकः ।
अस्मान्पारं गमयतु पापाब्धेः पावकस्तथा ॥ ६२ ॥

अथ शान्त्यर्थकऋचां व्याख्यानम्—जातवेदस इति । सोमयागानुष्ठातारो वयं लतात्मकं सोमं सुनवामाभिषुतं करवाम । कस्मै, जातानि वेदांसि द्रव्याणि सकल· ज्ञानानि वा यस्मात्तस्मै जातवेदसेऽग्नये । यस्मा अग्नये सोमं सुनवाम सोऽग्निर्वेदः सर्वज्ञः, अरातीयतोऽरातित्वं शत्रुत्वमस्मासु ये कर्तुमिच्छन्ति तेऽरातीयतः । तान्निदहाति नितरां दहतु । किंच नोऽस्मत्संबन्धीनि विश्वा सर्वाणि दुर्गाणि दुस्तराणि एनांसि अतिपर्षत्, विनाशयतु । यथा नाविको नावा सिन्धुं पारं जिगमिषूंस्तारयति तथा दुरिता दुरितानि दुरितसागरपारं भगवानग्निरस्मान्गमयताम् ॥ ॥ ६० ॥ ६१ ॥ ६२ ॥

मा नस्तोके तनये मा न आयौ मा नो गोषु
मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र
भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥

( ऋ० सं० अ० १ अ० ८ व० ६ )

रुद्रोदनमधर्मिभ्यो राति दत्ते ततः शिवः ।
रुद्र इत्युच्यते प्रीत्या श्रुत्या मुनिवरैरपि ॥ ६३ ॥
रौति सत्यं शब्दयति रुद्गीर्वेदान्तरूपिणी ।
तया वाऽऽद्रियते भक्त्या वर्ण्यते रुद्र उच्यते ॥ ६४ ॥
आत्मजं तत्सुतं चाऽऽयुर्गा अश्वांश्च सुतादिकान् ।
मा हिंसयास्मदीयांस्त्वं मा वधीः कोपसंयुतः ॥
हव्ययुक्ता वयं रुद्र सदैव त्वां हवामहे ॥ ६५ ॥

मा नस्तोक इति । रोदयति पापिन इति रुद्रः । रौति यथार्थं शब्दयतीति रुद्वेदो वेदान्तलक्षणा वाक्तया द्रियत आद्रियते सादरं प्रतिपाद्यत इति रुद्रः । रुद्रोदनं भक्तसंबन्धि द्रावयति कुत्सितगतिं प्रापयतीति वा रुद्रः । तत्संबोधनं हे रुद्र भगवन्नोऽस्माकं तोके तोकं पुत्रं द्वितीयार्थे सप्तम्यः । तनये तत्पुत्रं च मा रीरिषो मा विनाशय । आयौ, आयुं जीवितकालं गोषु गा अश्वेषु अश्वान्मा रीरिषः ।

अपि च भामितः क्रुद्धः सन्वीरान्पुत्रभृत्यादीन्मा वधीः । तदर्थं वयं हविष्मन्तो हव्ययुक्ताः सन्तः सदमित्सदैव त्वां हवामहे ॥ ६३ ॥ ६४ ॥ ६५ ॥

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥

(ऋ० सं० अ० ५ अ० ४ व० ३०)

यजामहे त्रिनेत्रं त्वां सुगन्धिं पुष्टिवर्धनम् ॥ ६६ ॥
कर्कट्यादिफलं पक्वं यथा वृन्तात्प्रमुच्यते ।
तथा मृत्योर्मोचयास्मानमृतान्मा विमोचय ॥ ६७ ॥

त्र्यम्बकं यजामहे । हे भगवन्, त्र्यम्बकं त्रिनेत्रं सुगन्धिं दिव्यसौरभयुक्तं पुष्टिवर्धनं स्वभक्तपालनवर्धकं त्वां यजामहे । यथोर्वारुकं कर्कट्यादेः फलं पक्वं सद्बन्धनाद्वृन्तान्मुच्यते तथाऽस्मान्मृत्योः सकाशान्मुक्षीय मोचय । अमृतान्मोक्षान्मा मुक्षीय मा मोचय ॥ ६६ ॥ ६७ ॥

समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥

(ऋ० सं० अ० ८ अ० ८ व० ४९)

अस्मद्गोपनविषयो यः प्रयत्नोऽस्ति वः सुराः ।
अवक्रः सोऽस्त्ववक्राणि सन्त्वन्तःकरणानि वः ॥ ६८ ॥
अवक्रमस्तु भवतां संकल्पादियुतं मनः ।
हे वेदोक्तसुरा यत्नमनोन्तःकरणानि वः ॥
सुलभानि यथा साधौ तथा स्युस्तादृशे मयि ॥ ६९ ॥

समानी व इति। भो वेदमन्त्रोक्तसमस्तदेवता वो युष्माकमाकूतिरस्मद्रक्षणप्रयत्नः समानी सरलाऽस्तु वो हृदयानि समाना सरलानि वो मनः संकल्पादियुक्तं मानसं समानं सरलमस्तु । वो युष्माकमाकूतिहृदयमनांसि सति सज्जने सुसहानि सुलभानि यथा तथाऽस्मासु सुलभानि भूयासुरिति योजयितव्यम् ॥ ६८ ॥ ६९ ॥

तच्छं* योरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये

---

* अयं मन्त्रस्तैत्तिरीयशाखानुसारी पठनीय इति प्रतिभाति तथाऽपि तादृक्संप्रदायाभावात्तथाऽत्र न स्थापितः । परं तु ऋक्शाखायामेतन्मन्त्रस्याभावादृक्शाखानुसारिपठनस्याशक्यत्वात्सूत्रादौ संपूर्णमन्त्रपाठाभावात्सौत्रधर्मेणापि पठनस्याशक्यत्वाच्च तैत्तिरीयशाखानुसारिपठनसंप्रदायाभावे मूलं सुधीभिश्चिन्त्यम् ।

**दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं चतुष्पदे ॥**

ख्यातं सुखं सर्वदेवा दुःखस्यामिश्रणं तथा ।
युष्मत्प्रसादाद्याचाम(मो) गानं कर्तुं मखाय वै ॥ ७० ॥
गानं कर्तुं मखेशाय दैवी श्रेयःपरम्परा ।
अस्त्वस्मभ्यं मदीयेभ्यो मनुष्येभ्यश्च साऽस्तु वै ॥ ७१ ॥
समायात्वौषधं चास्मानुत्कृष्टं सर्वरोगहृत् ।
अस्मदीयद्विपादाय चतुष्पादाय शं भवेत् ॥ ७२ ॥

**तच्छं योरिति** । भोः सर्वदेवास्तत्प्रसिद्धं शमैहिकामुष्मिकं सुखं, **योरि**त्यव्ययं यु मिश्रणामिश्रणयोरितिधातूत्पन्नम् । अत्रामिश्रणमुपादीयते । दुःखामिश्रणं युष्मत्प्रसादाद्वयमावृणीमहे । किं कर्तुं यज्ञायाग्निष्टोमादिनिष्पत्तये । गातुमौद्गात्रं कर्तुम् । पुनः किं कर्तुं यज्ञपतये परमेश्वराय गातुं नोऽस्मभ्यं **दैवी** देवसंबन्धिनी **स्वस्तिः** कल्याणपरम्पराऽस्तु । किंच नोऽस्मत्संबन्धिमानुषेभ्यः स्वस्तिरस्तु । ऊर्ध्वमुत्कृष्टं भेषजमौषधमस्मान्प्रति **जिगातु** पुनः पुनरागच्छतु । **नो द्विपदे** पुत्रादये **चतुष्पदे** गवादये च **शमस्तु** । शो तनूकरणे, श्यति दुःखं तनू करोतीति शम् ॥ ७०॥७१॥७२॥

**नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमि ॥**

( आ० गृह्यसू० अ० ३ )

भवस्य हेत्यै जगतामित्यादिश्रुतिवाक्यतः ।
वर्धनात्सर्वजगतां ब्रह्मा शिव उदीरितः ॥ ७३ ॥
तस्मै च वह्नये भूम्यै चौषधीभ्यो गिरे नतिम् ।
कुर्वे तत्पतये धात्रे विष्णवे महते नमः ॥ ७४ ॥

**नमो ब्रह्मण इति** । बृंहयति वर्धयति चतुर्दश भुवनानीति ब्रह्मा परशिवस्तस्मै **नमो**ऽस्तु । ननु शिवस्य कथं ब्रह्मत्वम् । "दिशां च पतयेऽन्नानां पतये क्षेत्राणां पतय ओषधीनां पतये जगतां पतये" इत्यादिरुद्राध्यायवाक्यैर्बहुधा प्रपञ्चितम् । पतिः पालक इति त्रयीभाष्यकृतः । **वाचः** सरस्वत्याः **पतये** विरिञ्चये **नमो**ऽस्तु । गीर्वाग्वाणी सरस्वतीति कोशात् । **विष्णवे नमो**ऽस्तु । **महते** समस्तसुरपूज्याय । इदं त्रयाणां विशेषणम् । **अग्नये, पृथिव्यै, ओषधीभ्यः, वाचे** वाग्देवतायै **नमो**ऽस्तु । ओषधीनां नमस्कारः किमितीति चेत्, अन्नमूलं हि सौभाग्यम्— 'अन्नᳪ साम्रा-

यानामधिपति तन्माऽवतु' इति श्रुतेः। अत्र दत्तहविषा देवा अप्युपजीवन्ति तस्ताभ्यो नतिर्विहिता ॥ ७३ ॥ ७४ ॥

नमः प्राच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमो दक्षिणायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमः प्रतीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम उदीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम ऊर्ध्वायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमोऽधरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमोऽवान्तरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमो गङ्गायमुनयोर्मध्ये ये वसन्ति ते मे प्रसन्नात्मानश्चिरं जीवितं वर्धयन्ति नमो गङ्गायमुनयोर्मुनिभ्यश्च नमो नमो गङ्गायमुनयोर्मुनिभ्यश्च नमः ॥

(तै० आ० प्र० २ अ० २०)

प्राग्दिशे तन्निवासिभ्यो देवेभ्यश्च नमो नमः।
रीत्याऽनया सर्वदिग्भ्यो देवेभ्योऽपि नमो नमः ॥ ७५ ॥

मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि ।
द्युम्नं चित्रश्रवस्तमम् ॥ (ऋ० सं० अ० ३ अ० ४ व० ६)

मित्रवद्धितकर्तुर्वै मर्त्यधर्तुश्च वृष्टिभिः।
दीप्तियुक्तस्य सूर्यस्य सेव्यमन्नं जनैस्तथा ॥
विशेषचित्रकीर्त्याढ्यं द्रव्यं सोऽवतु नः सदा ॥ ७६ ॥

अथोपस्थानम्—उपस्थानं नाम साञ्जलिबन्धं देवताप्रार्थनम् । मित्रस्येति देवस्य दीप्यमानस्य, चर्षणीधृतो वृष्टिभिर्मर्त्यानां धारकस्य सर्वेषां जगतां विशेषत कमलानां मित्रस्य सुहृदः सूर्यस्य संबन्धि अवो रक्षणमन्नं वा सानसि सेवनीयम् तथा द्युम्नं धनं, चित्रश्रवस्तममतिशयेन चित्रकीर्तियुक्तम् । तदपि सानसि सेव्यम् स सूर्योऽस्मानवत्विति वाक्यशेषः ॥ ७६ ॥

अभि यो महिना दिवं मित्रो बभूव सप्रथाः ।
अभि श्रवोभिः पृथिवीम् ॥

(ऋ० सं० अ० ३ अ० ४ व० ६)

कीर्तियुक्तो हि यो मित्रः स्वमहिम्नाऽभितो दिवम् ।
वर्ततेऽन्नैः कृतैर्वृष्ट्या पृथिवीमभिवर्तते ॥ ७७ ॥

अभि यो महिनेति । यो मित्रः सप्रथाः कीर्तियुक्तः सन्महिना स्वमहिम्न दिवमभि अभितो बभूव वर्तते । श्रवोभिर्वृष्ट्या कृतैरन्नैः पृथिवीमभिबभूवाभिव्याप्य वर्तते ॥ ७७ ॥

मित्राय पञ्च येमिरे जना अभिष्टिशवसे । स
देवान्विश्वान्बिभर्ति ॥ (ऋ० सं० अ० ३ अ० ४ व० ६)

निषादपञ्चमा वर्णा मित्राय द्विषतः प्रति ।
अभिगन्तृबलाढ्याय हवींष्युद्धारयन्ति वै ।
स्वस्वरूपतया देवान्धारयत्यखिलांश्च सः ॥ ७८ ॥

मित्राय पञ्चेति । पञ्च जनाः निषादपञ्चमा वर्णा अभिष्टिशवसे शत्रून्प्रति अभिगन्तृबलयुक्ताय मित्राय येमिरे हव्यानुद्धारयन्ति स सूर्यो विश्वान्बिभर्ति स्वस्वरूपतया सर्वान्देवान्धारयति ॥ ७८ ॥

मित्रो देवेष्वायुषु जनाय वृक्तबर्हिषे । इष
इष्टव्रता अकः ॥ (ऋ० सं० अ० ३ अ० ४ व० ६)

दानादियुक्तमर्त्येषु हविरासादनाय यः ।
छिन्नबर्हिर्जनस्तस्मै जगतां परिपालकः ॥
कल्याणयज्ञकारीणि ददात्यन्नानि भास्करः ॥ ७९ ॥

मित्रो देवेष्विति । देवेषु दानादियुक्तेषु आयुषु मर्त्येषु यो जनो वृक्तबर्हिर्यागार्थं

ऽयदर्मस्तस्मै मित्रो जगत्परिपालको रविरिष्टव्रताः कल्याणयज्ञकारिणीरिषोऽन्नानि कः करोति ददातीत्यर्थः ॥ ७९ ॥

इमं मे वरुण श्रुधी हवमद्या च मृळय ।
त्वामवस्युराचके ॥ (ऋ० सं० अ० १ अ० २ व० १९)

इदं वरुण मन्त्रोक्तं शृण्वाह्वानं तु मामकम् ।
अस्मिन्नुपस्थानकाले कुरु त्वं मां सुखान्वितम् ॥
अवनेच्छुः कामये त्वां पूर्वार्धेनान्वयस्ततः ॥ ८० ॥

अथ सायंसंध्योपस्थानम्—इमं म इति । हे वरुण त्वं मे मम संबन्धिनमिमं त्यक्षं मन्त्रवाग्भिः पठ्यमानं ह्वं त्वदाह्वानं श्रुधि शृणु अद्यास्यामुपस्थानवेलायाम्। ाद्येत्यत्र निपातस्य चेति दीर्घः । मां मृळय सुखय । अवस्यू रक्षणेच्छुरहं यस्मा- ामाचके कामये तस्माच्छृणु मृळय चेति पूर्वेणान्वयः ॥ ८० ॥

तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते
यजमानो हविर्भिः । अहेळमानो वरुणेह
बोध्युरुशंस मा न आयुः प्रमोषीः ॥

(ऋ० सं० अ० १ अ० २ व० १५)

याचे वरुण तद्वस्तु मन्त्रेण त्वां स्तुवन्नहम् ।
यष्टा हव्यैः कामयते यत्त्वत्तो बहुसंस्तुत ॥
बुध्यस्व मामिहाक्रोध आयुर्नो मा विनाशय ॥ ८१ ॥

तत्त्वा यामीति । हे वरुण यजमानो हविर्भिस्तद्यद्वस्तु आशास्ते त्वत्तः कामयतेऽहं तद्वस्तु त्वा त्वां यामि याचामि । यामीति याचनानामसु निघण्टौ पाठात् । कीदृशो यजमानोऽहं च, ब्रह्मणा वन्दमानो वैदिकमन्त्रेण त्वामुपतिष्ठ- मानः । उरुशंस बहुस्तुत हे वरुणाहेळमानोऽक्रुध्यन्सन्निहास्मिँल्लोके बोधि मां ोष्यत्वेन जानीहि । नोऽस्माकमायुर्मा प्रमोषीर्मा विनाशय ॥ ८१ ॥

उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि ।
ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम्

(तै० आ० प्र० १० अ० ३)

सर्वोत्कृष्टे काशिकादिक्षेत्रे श्रेष्ठगिरेस्तथा ।
मेर्वादेः शृङ्गदेशे च मानसादौ भुवः स्थले ॥ ८२ ॥
हिमाचलादेः शिखरे प्रादुर्भावसमन्विते ।
हे गायत्रि ब्राह्मणेभ्योऽनुज्ञाता गच्छ वै सुखम् ॥ ८३ ॥

उत्तमे शिखर इति *द्वयोर्वामदेव ऋषिः । अनुष्टुब्गायत्री । उद्वासने विनियोगः । उत्तमे सर्वोत्कृष्टे वाराणस्यादिक्षेत्रे शिखरे मेर्वादिशिखरे जाते प्रादुर्भूते भूम्यां मानससरोवरादौ पर्वतमूर्धनि हिमाचलादिमस्तके च जाते हे देवि गायत्रि ब्राह्मणेभ्यः सकाशादभ्यनुज्ञाताऽनुज्ञां प्राप्ता सती पूर्वोक्तस्थानेषु यथासुखं गच्छ ॥ ८२ ॥ ८३ ॥

आकाशात्पतितं तोयं यथा गच्छति सागरम् ।
सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥

नभसः पतितं वारि यथा गच्छति वारिधिम् ।
सर्वदेवनतिस्तद्वत्परमात्मानमेति वै ॥ ८४ ॥

आकाशादिति । आकाशाद्भूमौ पतितं तोयं नदीनदादिद्वारेण यथा सागरं गच्छति तथेन्द्रादिसर्वदेवेभ्यः कृतो नमस्कारः केशवं परमात्मानं प्रति गच्छति । को ब्रह्मा, ईशः शंकरः, अवति रक्षति जगदित्यवो विष्णुः, त्रिमूर्तिस्वरूपः सर्वदेवतात्मकश्च परमात्मा केशवः केश, अव इत्यत्र शकन्ध्वादित्वात्पररूपम् ॥ ८४ ॥

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ (ऋ० सं० अ० १ अ० ४ व० ७)

प्रज्ञापका उद्वहन्ति किरणाः प्रेरकं रविम् ।
प्रसिद्धं जातभूतानां वेदितारं च भास्वरम् ॥ ८५ ॥

अथ सूर्योपस्थानमन्त्रा व्याख्यायन्ते—उदु त्यमिति । केतवः +प्रज्ञापकाः सूर्यरश्मयो देवं द्योतमानं त्यं प्रसिद्धं जातवेदसं जातानां प्राणिनां वेदितारं सूर्यं सर्वस्य प्रेरकमादित्यमुदूर्ध्वं वहन्ति । उ इति पादपूरणे । किमर्थं विश्वाय विश्वस्य दृशे द्रष्टुं यथा सर्वे जनाः पश्यन्ति तथोर्ध्वं वहन्तीत्यर्थः ॥ ८५ ॥

अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥ (ऋ० सं० अ० १ अ० ४ व० ७)

---

* एतट्टीकानुरोधेन 'स्तुतो मया वरदा' इति मन्त्रोऽपेक्षितः । अस्य व्याख्यानग्रन्थ उपलभ्यके न विद्यते । + केतुवत्प्रकाशका इति तैत्तिरीयभाष्येऽर्थः ।

नक्षत्राण्यपगच्छन्ति रात्रिभिः सह तस्कराः।
यथा प्रसिद्धा गच्छन्ति दृष्ट्वैवाऽऽगमनं रवेः॥
विश्वप्रकाशकस्यैते पलायन्ते हि तद्भिया॥ ८६॥

अप त्य इति। त्ये ते प्रसिद्धास्तायवस्तस्करा इव नक्षत्राणि अक्तुभी रात्रिभिः सहापयन्ति अपगच्छन्ति। विश्वचक्षसे विश्वस्य सर्वस्य प्रकाशकस्य सूराय सूर्यस्य, आगमनं दृष्ट्वेति शेषः। तस्करा नक्षत्राणि च रात्रिभिः सह सूर्य आगमिष्यतीति भीत्या पलायन्त इत्यर्थः॥ ८६॥

**अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु।**
**भ्राजन्तो अग्नयो यथा॥**

(ऋ० सं० अ० १ अ० ४ व० ७)

प्रज्ञापका भास्करस्य मयूखाः क्रमशोऽधिकम्॥ ८७॥
ईक्षन्ते निखिलाञ्जातान्दीप्यमाना इवाग्नयः॥
प्रकाशयन्ति निखिलं जगदित्थं त्विहाऽऽशयः॥ ८८॥

अदृश्रमस्येति। अस्य सूर्यस्य केतवः प्रज्ञापका रश्मयो जनाननु व्यदृश्रं जातान्सर्वाननुक्रमेण विशेषतः प्रेक्षन्ते सर्वं जगत्प्रकाशयन्तीत्यर्थः। तत्र दृष्टान्तः— भ्राजन्तो अग्नयो यथा दीप्यमाना अग्नय इव। दृशिर् प्रेक्षणे, वर्तमाने लुङ्॥ ॥ ८७॥ ८८॥

**तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य। विश्व-**
**माभासि रोचनम्॥** (ऋ० सं० अ० १ अ० ४ व० ७)

अन्यैरशक्यस्य च गन्तुमध्वनो गन्ताऽसि वा तारयिताऽसि रोगात्।
भक्तस्य सर्वैरसि दर्शनीयो यद्वा प्रकाश्यं त्वखिलं च येन॥ ८९॥
प्रकाशकर्ता त्वथवा निशायां चन्द्रादिकानामपि दीप्तिकर्ता।
द्वारस्थितादर्शतले निविष्टा रवेः करा वेश्मगतं तमो यथा॥ ९०॥
निवारयन्त्यम्मयचन्द्रताराबिम्बप्रविष्टा जगदन्धकारम्।
एवंप्रकारेण यतोऽस्ति तस्माद्व्याप्तं खमाभासयसि प्रदीप्तम्॥ ९१॥ 6592



अध्यात्मपक्षे—

अन्तर्यामितया सर्वप्रेरणात्सूर्यनामक।
परमात्मंस्तारकोऽसि संसाराब्धेर्यतोऽखिलैः॥ ९२॥

मुमुक्षुभिस्त्वं द्रष्टव्यः साक्षात्कर्तव्य आशयः।
अधिष्ठानापरोक्षे तु दृश्यं सर्वं निवर्तते ॥ ९३ ॥
सूर्यादीनां तथा कर्ता दृश्यं दीप्तं यथा तथा।
प्रकाशयसि चैतन्यस्फुरणे दृश्यते जगत् ॥ ९४ ॥

तरणिरिति। हे सूर्य त्वं तरणिस्तरिताऽन्येन गन्तुमशक्यस्य महतोऽध्वनो गन्ताऽसि।

तथाच स्मर्यते—"योजनानां सहस्रे द्वे द्वे शते द्वे च योजने।
एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते" ॥

यद्वा—तरणिरुपासकानां रोगात्तारयिताऽसि। "आरोग्यं भास्करादिच्छेत्" इति स्मरणात्। तथा विश्वदर्शतो विश्वैः सर्वैः प्राणिभिर्दर्शतो दर्शनीयः। आदित्यदर्शनस्य चाण्डालादिदर्शनजनितपापनिबर्हणहेतुत्वात्। तथा चाऽऽपस्तम्बः—"चाण्डालादिदर्शने ज्योतिषां दर्शनम्" इति। यद्वा—विश्वं सर्वं दर्शतं द्रष्टव्यं प्रकाश्यं येन स तथोक्तः। तथा ज्योतिष्कृत्प्रकाशकर्ता। यद्वा—चन्द्रादीनां रात्रौ प्रकाशो येन। रात्रौ हि अम्मयेषु चन्द्रादिबिम्बेषु सूर्यकिरणाः प्रतिफलिताः सन्तोऽन्धकारं निवारयन्ति। यथा द्वारस्थितदर्पणे पतिताः सूर्यरश्मयो गृहान्तर्गतं तमो निवारयन्ति तद्वदित्यर्थः। यस्मादेवं तस्माद्विश्वं व्याप्तं रोचनं रोचमानमन्तरिक्षमा समन्ताद्भासि प्रकाशयसि। यद्वा—हे सूर्यान्तर्यामितया सर्वस्य प्रेरक परमात्मंस्तरणिः संसाराब्धेस्तारकोऽसि यस्मात्तस्मात्त्वं विश्वदर्शतो विश्वैः सर्वैर्मुमुक्षुभिर्दर्शतो द्रष्टव्यः साक्षात्कर्तव्यः। अधिष्ठानसाक्षात्कारे ह्यारोपितं निवर्तते। ज्योतिष्कृत्सूर्यादेः कर्ता। "चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत" इति श्रुतेः। ईदृशस्त्वं चिद्रूपस्तथा विश्वं सर्वं दृश्यजातं रोचनं दीप्यमानं यथा भवति तथाऽऽभासि प्रकाशयसि। चैतन्यस्फुरणे हि सर्वं जगद्दृश्यते। "तमेव भान्तमनु भाति सर्वम्" इति श्रुतेः ॥ ८९ ॥ ९० ॥ ९१ ॥ ॥ ९२ ॥ ९३ ॥ ९४ ॥

**प्रत्यङ्देवानां विशः प्रत्यङ्ङुदेषि मानुषान्।**
**प्रत्यङ्विश्वं स्वर्दृशे ॥** (ऋ० सं० अ० १ अ० ४ व० ७)

देवप्रजा मरुत्संज्ञाः प्रति गच्छन्नुदेषि वै।
मनुष्यान्प्रति गच्छंश्च यासि त्वं भास्करोदयम् ॥ ९५ ॥
तथा व्याप्तं स्वर्गलोकं द्रष्टुं प्रत्यङ्ङुदेषि वै।
त्रिलोकस्था जनाः सूर्यं पश्यन्ति स्वाभिमुख्यतः ॥ ९६ ॥

प्रत्यङ्देवानामिति। हे सूर्य त्वं देवानां विशः प्रजा मरुत्संज्ञकान्देवान्।

" मरुतो वै देवविशः " इति श्रुत्यन्तरात्। तान्मरुत्संज्ञकान्देवान्प्रत्यङ्ङुदेषि तान्प्रति गच्छन्नुदयं प्राप्नोषि तेषामभिमुखं यथा भवति तथेत्यर्थः। तथा मानुषान्मनुष्यान्प्रत्यङ्ङुदेषि। तेऽपि यथाऽस्मदभिमुख एव सूर्य उदेतीति मन्यन्ते तथा विश्वं व्याप्तं स्वः स्वर्लोकं दृशे द्रष्टुं प्रत्यङ्ङुदेषि यथा स्वर्लोकवासिनो जनाः स्वस्वाभिमुख्येन पश्यन्ति तथोदेषीत्यर्थः। एतदुक्तं भवति—लोकत्रयवर्तिनो जनाः सर्वेऽपि स्वस्वाभिमुख्येन सूर्यं पश्यन्ति। एतच्चाऽऽम्नायते—"तस्मात्सर्व एव मन्यते मां प्रत्युदगात्" इति ॥ ९५ ॥ ९६ ॥

येना॑ पावक॒ चक्ष॑सा भु॒रण्य॑न्तं॒ जनाँ॒ अनु॑। त्वं वरु॑ण॒ पश्य॑सि ॥ (ऋ० सं० अ० १ अ० ४ व० ८)

येन प्रकाशेन च सर्वशोधक लोकं त्विमं वै त्वमनुक्रमेण।
प्रकाशयस्यस्मदनिष्टवारक स्तुमः प्रकाशं जनधारकं तम् ॥ ९७ ॥

येना पावकेति। हे पावक सर्वस्य शोधक वरुणानिष्टवारक सूर्य त्वं जनाञ्जातान्प्राणिनो भुरण्यन्तं धारयन्तमिमं लोकं येन चक्षसा प्रकाशेनानुपश्यसि अनुक्रमेण प्रकाशयसि। तं प्रकाशं स्तुम इति शेषः। यद्वोत्तरस्यामृचि संबन्धस्तेन चक्षसा व्येषीति। तथा च यास्केनोक्तम्—"तत्ते वयं स्तुम इति वाक्यशेषोऽपि वोत्तरस्यामन्वयस्तेन व्येषि" इति ॥ ९७ ॥

वि द्यामे॑षि॒ रज॑स्पृ॒थ्वहा॒ मिमा॑नो अ॒क्तुभिः॑। पश्य॒ञ्जन्मा॑नि सूर्य ॥ (ऋ० सं० अ० १ अ० ४ व० ८)

अन्तरिक्षाभिधं लोकं विस्तीर्णं च विशेषतः ॥ ९८ ॥
गच्छस्युत्पादयन्सूर्य दिवसान्रात्रिभिः सह।
तथैव भूतवृन्दानि जन्मवन्ति प्रकाशयन् ॥ ९९ ॥

वि द्यामेषीति। हे सूर्य त्वं पृथु विस्तीर्णं रजो लोकम्। " लोका रजांस्युच्यन्ते " इति यास्कः। द्यामन्तरिक्षलोकं व्येषि गच्छसि। किं कुर्वन्, अहाऽहानि अक्तुभी रात्रिभिः सह मिमान उत्पादयन्। आदित्यगत्यधीनत्वादेहोरात्रविभागस्य। तथा जन्मानि जन्मवन्ति भूतानि पश्यन्प्रकाशयन् ॥ ९८ ॥ ९९ ॥

स॒प्त त्वा॑ ह॒रितो॒ रथे॒ वह॑न्ति देव सूर्य। शो॒चिष्के॑शं विचक्षण ॥ (ऋ० सं० अ० १ अ० ४ व० ८)

हे सूर्य देव सर्वस्य प्रकाशक तुरंगमाः ॥ १०० ॥
हरिसंज्ञाः सप्तसंख्याः करा वा रसहारकाः ॥
वहन्ति त्वां दीप्तकेशं स्यन्दने संस्थितं तथा ॥ १०१ ॥

सप्त त्वेति । हे सूर्य देव द्योतमान विचक्षण सर्वस्य प्रकाशयितः सप्त सप्तसंख्याका हरितोऽश्वा रसाहरणशीला रश्मयो वा त्वा त्वां वहन्ति प्रापयन्ति । कीदृशं त्वां रथेऽवस्थितमिति शेषः । तथा शोचिष्केशं शोचींषि तेजांस्येव केशा इव दृश्यन्ते यस्मिन्स तथोक्तस्तम् । हरित इत्यादित्याश्वानां संज्ञा । "हरित आदित्यस्य" इति निघण्टावुक्तत्वात् ॥ १०० ॥ १०१ ॥

अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः ।
ताभिर्याति स्वयुक्तिभिः ॥ (ऋ० सं० अ० १ अ० ४ व० ८)

सर्वस्य प्रेरकः सूर्यः शोधिकास्तुरगस्त्रियः ।
सप्तसंख्या योजितवान्पातयित्री रथस्य न ॥ १०२ ॥
योजिताभी रथे स्वेन ताभिर्यात्यध्वरं प्रति ।
अतस्तस्मै हविर्देयं वाक्यशेषेण गम्यते ॥ १०३ ॥

अयुक्तेति । सूरः सर्वस्य प्रेरकः सूर्यः शुन्ध्युवः शोधिका अश्वस्त्रियः सप्तसंख्याका अयुक्त स्वरथे योजितवान् । कीदृश्यः, रथस्य नप्त्यो न पातयित्र्यो रथो याभिर्न पततीत्यर्थः । स्वयुक्तिभिः स्वकीययोजनेन रथसंबन्धाभिस्ताभिरश्वस्त्रीभिर्याति यज्ञगृहं प्रत्यागच्छति । अतस्तस्मै हविर्देयमिति वाक्यशेषः ॥१०२॥१०३॥

उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥

(ऋ० सं० अ० १ अ० ४ व० ८)

रात्र्यंहसोः परस्ताद्धि वर्तमानं प्रभायुतम् ।
देवेषु मध्ये दानादियुक्तं श्रेष्ठतरं तथा ॥ १०४ ॥
पश्यन्त उत्कृष्टतमं ज्योतिः सूर्यात्मकं वयम् ।
भक्त्या हविर्भिः स्तुतिभिरुत्कर्षेणाऽऽप्नवाम वै ॥ १०५ ॥

उद्वयमिति । वयमनुष्ठातारस्तमसस्परि तमसः परि रात्रेरूर्ध्वं वर्तमानं पापादुपरि वर्तमानं च पापरहितमित्यर्थः । तथा चाऽऽम्नायते—"उद्वयं तमसस्परीत्याह पाप्मा वै तमः पाप्मानमेवास्मादपहन्ति" इति । ज्योतिस्तेजस्विनम् । उत्तरमुद्गततरमुत्कृष्टतरं वा । देवत्रा देवेषु मध्ये देवं दानादिगुणयुक्तं सूर्यं पश्यन्तः स्तुतिभिर्हविर्भि-

श्रोपासीनाः सन्त उत्तममुत्कृष्टतमं ज्योतिः सूर्यरूपं तेज उदुत्कर्षेणागन्म प्राप्नवाम। तथा च श्रूयते—अगन्म ज्योतिरुत्तममित्याह। असौ वा आदित्यो ज्योतिरुत्तमम्। आदित्यस्यैव सायुज्यं गच्छति" इति। युक्तं चैतत्। "तं यथा यथोपासते तदेव भवति" इति श्रुत्यन्तरात्॥ १०४॥ १०५॥

उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम्। हृद्रोगं मम सूर्य हरिमाणं च नाशय॥

(ऋ० सं० अ० १ अ० ४ व० ८)

सर्वेषामनुकूलकान्तिसहित त्वं चोदयन्हृद्गतं
रोगं कान्तिहरं च बाह्यमपि मे रोगद्वयं संहर॥
यद्वा देहगतं च रोगजनितं वर्णं हरित्संज्ञकं
सूर्यास्मिन्समये हि नाशय परं खं प्राप्नुवन्संमुखम्॥ १०६॥

उद्यन्नद्येति। हे सूर्य सर्वस्य प्रेरक मित्रमहः सर्वानुकूलदीप्तियुक्त, अद्यास्मिन्काल उद्यन्नुदयं गच्छन्नुत्तरामुद्गततरां दिवमन्तरिक्षमारोहन्नाभिमुख्येन प्राप्नुवन्। यद्वा दिवमन्तरिक्षमुत्तरामारोहन्नुत्कर्षेण प्राप्नुवन्। एवंविधस्त्वं मम हृद्रोगं हृदयगतमान्तरं रोगं हरिमाणं शरीरकान्तिहरणशीलं बाह्यरोगं च। यद्वा शरीरगतं हरिद्वर्णं रोगप्राप्तं वैवर्ण्यमित्यर्थः। तदुभयमपि नाशय स्तोतारं मामुभयविधरोगान्मोचयेत्यर्थः॥ १०६॥

शुकेषु मे हरिमाणं रोपणाकासु दध्मसि।
अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि॥

(ऋ० सं० अ० १ अ० ४ व० ८)

हरिद्भावं देहगं म इच्छत्सु शुकपक्षिषु॥ १०७॥
स्थापयामः सारिकाह्वपक्षिणीषु स तिष्ठतु।
हरिद्रातालवृक्षेषु हरित्त्वं निदधीमहि॥ १०८॥

शुकेषु म इति। मे मदीयं हरिमाणं शरीरगतं हरिद्वर्णस्वभावं शुकेषु तादृशवर्णं कामयमानेषु शुकपक्षिषु तथा रोपणाकासु सारिकासु पक्षिविशेषेषु दध्मसि स्थापयामः। अथो अपि च हारिद्रवेषु हरिद्रातालवृक्षेषु मे मदीयं हरिमाणं निदध्मसि निदधीमहि। स च हरिमा तत्रैवाऽऽस्तामस्मान्मा बाधिष्टेत्यर्थः॥ १०७॥ १०८॥

उदगादयमादित्यो विश्वेन सहसा सह।

द्विषन्तं मह्यं रन्धयन्मो अहं द्विषते रधम् ॥

(ऋ० सं० अ० १ अ० ४ व० ८)

पुरोवर्त्यदितेः पुत्र उदयं प्राप्तवान्सह ।
बलेन च समग्रेण ममोपद्रवकारिणम् ॥ १०९ ॥
रोगं हिंसन्नहं नैव द्वेष्ट्रे रोगाय हिंसनम् ।
करोमि सवितैवास्मद्रोगं शीघ्रं विनाशयेत् ॥ ११० ॥

उदगादयमिति। अयं पुरोवर्त्यादित्योऽदितेः पुत्रः सूर्यो विश्वेन सहसा सर्वेण बलेनोदगादुदयं प्राप्तवान् । किं कुर्वन्, मह्यं द्विषन्तं रन्धयन् ममोपद्रवकारिणं रोगं हिंसयन् । अपि चाहं द्विषतेऽनिष्टकारिणे रोगाय मो रधं मैव हिंसा करोमि । सूर्य एवास्मदनिष्टकारिणं रोगं विनाशयत्वित्यर्थः ॥ १०९ ॥ ११० ॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुण-
स्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य
आत्मा जगतस्तस्थुषश्च (ऋ० सं० अ० १ अ० ८ व० ७)

किरणा अमरा वोक्ता देवास्तद्वृन्दलक्षणम् ।
सवितुर्मण्डलं चित्रमुदगादुदयाचलम् ॥ १११ ॥
मित्राग्निवरुणादीनां द्योतकं च दृगिन्द्रियम् ।
द्यां भुवं खं चाऽऽ समन्तात्तेजोभिः समपूरयत् ॥ ११२ ॥
ईदृङ्मण्डलनिष्ठोऽर्कः सर्वान्तर्यामिलक्षणः ।
परमात्मा प्रेरणेन स्थिरजङ्गमयोस्तथा ॥ ११३ ॥
स्वरूपभूतः कार्यं तु कारणान्नातिरिच्यते ।
जङ्गमस्य स्थावरस्य जीवात्मा वाऽयमीरितः ॥ ११४ ॥

चित्रं देवानामिति। देवानां दीव्यन्तीति देवा रश्मयस्तेषां देवानां सुराणां वाऽनीकं तेजःसमूहरूपं चित्रमाश्चर्यकरं सूर्यमण्डलमुदगादुदयाचलं प्राप्तमासीत् । कीदृशं मित्रस्य वरुणस्याग्नेश्च, उपलक्षणमेतत्, उपलक्षितानां जगतां चक्षुः प्रकाशकं चक्षुरिन्द्रियस्थानीयं च । उदयं प्राप्य च द्यावापृथिवी दिवं स्वर्गं पृथिवीमन्तरिक्षं चाऽऽप्राः स्वकीयेन तेजसाऽऽ समन्तादपूरयत् । ईदृग्भूतो मण्डलान्तर्वर्ती सूर्योऽन्तर्यामितया सर्वप्रेरकः परमात्मा जगतो जङ्गमस्य तस्थुषः स्थावरस्य चाऽऽत्मा स्वरूपभूतः । स हि सर्वस्य स्थावरजङ्गमात्मकस्य कार्यवर्गस्य कारणं, कारणाच्च कार्यं नातिरिच्यते । तथा च पारमर्षं सूत्रम्—"तदनन्यत्वमारम्भणशब्दादिभ्यः" इति ।

यद्वा स्थावरजङ्गमात्मकस्य सर्वप्राणिजातस्य जीवात्मा। उदिते हि सूर्ये मृतप्रायं सर्वं जगत्पुनश्चेतनयुक्तं सदुपलभ्यते। तथाच श्रूयते—"योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति" इति ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥

**सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात्। यत्रा नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम् ॥**

(ऋ० सं० अ० १ अ० ८ व० ७)

दानादिगुणसंपन्नां प्रदीप्तामुषसं रविः ॥ ११५ ॥
पश्चादभ्येति युवतिं रुचिरां मनुजो यथा।
यस्यामुषसि जातायां यष्टारो देवकामुकाः ॥ ११६ ॥
युग्मानि भूत्वा पत्नीभिरग्निहोत्रादिकं शुभम्।
विस्तारयन्ति प्रत्येकं शुभरूपफलाय वै ॥ ११७ ॥

सूर्यो देवीमुषसमिति। सूर्यो देवीं दानादिगुणयुक्तां रोचमानां दीप्यमानामुषसं पश्चादभ्येति उषसः प्रादुर्भावानन्तरं तामभिलक्ष्य गच्छति। तत्र दृष्टान्तः—मर्यो न योषां यथा कश्चिन्मनुष्यः शोभनावयवां गच्छन्तीं युवतिं स्त्रियं संततमनुगच्छति तद्वत्। यत्र यस्यामुषसि जातायां देवयन्तो देवान्यागार्थमात्मन इच्छन्तो यजमाना युगानि युग्मानि भूत्वा पत्नीभिः सहिताः सन्तो भद्रं कल्याणमग्निहोत्रादिकं कर्म भद्राय फलाय प्रति प्रत्येकं वितन्वते विस्तारयन्ति ॥ ११५ ॥ ११६ ॥ ११७ ॥

**भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः। नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः।** (ऋ० सं० अ० १ अ० ८ व० ७)

हर्तारोऽनुक्रमात्स्तुत्या निखिलैर्विस्मयावहाः।
गन्तव्यं प्रति गन्तारः कल्याणास्तुरगा रवेः ॥ ११८ ॥
नमस्यमाना अस्माभिरातिष्ठन्ति नभस्तलम्।
व्याप्नुवन्ति हि तत्कालं द्युलोकं धरणीं तथा ॥ ११९ ॥
किरणा वा रसहरा व्यापकाश्च विशेषणैः।
भद्रादिभिश्चतुर्भिश्च संयुक्ता नभसस्तलम् ॥
आतिष्ठन्ति व्याप्नुवन्ति सद्य एव तु रोदसी ॥ १२० ॥

भद्रा अश्वा इति । भद्राः कल्याणा अश्वा एतग्वाः । एतदुभयमश्वनाम । तत्रैकं क्रियापरं योजनीयम् । अश्वा व्यापनशीला हरितो हर्तारश्चित्रावयवा अनुमाद्यासोऽनुक्रमेण सर्वैः स्तुत्या एतमेतव्यं गन्तव्यं मार्गं गन्तार एतग्वाः सूर्याश्वा नमस्यन्तोऽस्माभिर्नमस्यमानाः सन्तो दिवोऽन्तरिक्षस्य पृष्ठमाऽस्थुरातिष्ठन्ति व्याप्नुवन्ति । यद्वा हरितो रसहरणशीला रश्मयो भद्रादिविशेषणविशिष्टा दिवः पृष्ठं नभस्तलमातिष्ठन्ति । द्यावापृथिवी द्यावापृथिव्यौ सद्यस्तदानीमेवैकेनाह्ना परियन्ति परितो गच्छन्ति व्याप्नुवन्तीत्यर्थः ॥ ११८ ॥ ११९ ॥ १२० ॥

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तो-
र्विततं संजभार । यदेदयुक्त हरितः सधस्था-
दाद्रात्री वासस्तनुते सिमस्मै ।( ऋ० सं० अ० १ अ० ८ व० ७)

स्वातन्त्र्यं च महत्त्वं च सवितुः प्रेरकस्य तत् ।
प्रारब्धस्यासमाप्तस्य कृष्यादेः कर्मणोऽन्तरे ॥ १२१ ॥
अस्तं यन्विततं तेज उपसंहरति स्वयम् ।
असमाप्तं विसृजति कर्मकर्ता तु कर्म तत् ॥ १२२ ॥
यदैवामुञ्चदश्वान्वा किरणान्स्वरथादसौ ।
अथ रात्रिः सर्वलोके तनोत्याच्छादकं तमः ॥ १२३ ॥

तत्सूर्यस्य देवत्वमिति । सूर्यस्य सर्वप्रेरकस्याऽऽदित्यस्य तद्देवत्वमीश्वरत्वं स्वातन्त्र्यमिति यावत् । महित्वं माहात्म्यं च तदेव । तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यत्कर्तोः कर्मनामैतत् । प्रारब्धापरिसमाप्तस्य कृष्यादिलक्षणस्य कर्मणो मध्या मध्येऽपरिसमाप्त एव कर्मणि विततं विस्तीर्णं स्वकीयं रश्मिजालमस्तं गच्छन्सूर्यः संजभार, अस्माल्लोकात्स्वात्मन्युपसंहरति । कर्मकरश्च प्रवृत्तं कर्मापरिसमाप्तमेव विसृजति अस्तं यन्तं सूर्यं दृष्ट्वा । ईदृशं स्वातन्त्र्यं महिमा च सूर्यव्यतिरिक्तस्य कस्यास्ति न कस्यापि, सूर्य एवेदृशं स्वातन्त्र्यं महिमानं चावगाहते । अपि च, इदित्यवधारणे । यदेत्, यस्मिन्नेव काले हरितो रसहरणशीलान्स्वरश्मीन्हरितवर्णानश्वान्वा सधस्थात्सह तिष्ठन्त्यस्मिन्निति सधस्थो रथस्तस्मादयुक्तामुञ्चत्, आदनन्तरमेव रात्री निशा वास आच्छादयितृ तमः सिमस्मै सर्वस्मै, सिमशब्दः सर्वशब्दपर्यायः, सप्तम्यर्थे चतुर्थी, सर्वस्मिँल्लोके विस्तारयति ॥ १२१ ॥ १२२ ॥ १२३ ॥

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते

द्योरुपस्थे। अनन्तमन्यद्रुशदस्य पाजः कृष्ण-
मन्यद्धरितः संभरन्ति॥ (ऋ० सं० अ० १ अ० ८ व० ७)

जलेशमित्राद्युपलक्षितस्य सर्वस्य लोकस्य तु संमुखं वै।
मध्येऽन्तरिक्षस्य करोति तेजो निरूपकं स्वोदयकाल एषः॥ १२४॥
अश्वा हरिद्वर्णसमन्विता वा रसान्हरन्तश्च रवेः करा वा।
दीप्तं समर्थं च तमोविनाशनेऽवसानहीनं तमसो विलक्षणम्॥ १२५॥
तेजोऽहनि स्वागमनैश्च कुर्वते कृष्णं तमः स्वापगमैर्निशायाम्।
कर्मेदृशं वै किरणाः प्रकुर्वते रवेर्महत्त्वं हि किमु प्रवाच्यम्॥ १२६॥

तन्मित्रस्येति। तत्तदानीमुदयसमये मित्रस्य वरुणस्यैतदुभयोपलक्षितस्य सर्व-जगतोऽभिचक्ष आभिमुख्येन द्योर्नभस उपस्थे मध्ये सूर्यः सर्वस्य प्रेरकः सविता रूपं निरूपकं तेजः कृणुते करोति। अपि च—अस्य सूर्यस्य हरितो रसहरणशीला रश्मयो हरिद्वर्णा अश्वा वा। अनन्तमवसानरहितं कृत्स्नस्य जगतो व्यापकं, रुशद्दीप्य-मानं श्वेतवर्णं, पाजः, बलनामैतत्। अतिबलस्यापि नैशस्य तमसो निवारणे समर्थम्। अन्यत्तमसो विलक्षणं तेजः संभरन्ति अहनि स्वकीयागमनेन निष्पादयन्ति। तथा कृष्णं कृष्णवर्णमन्यत्तमः स्वकीयगमनेन रात्रौ। अस्य रश्मयोऽप्येवं कुर्वन्ति किमु वक्तव्यं तस्य माहात्म्यमिति सूर्यस्तुतिः॥ १२४॥ १२५॥ १२६॥

अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता
निरवद्यात्। तन्नो मित्रो वरुणो मामहन्ता-
मदितिः सिन्धुः पृथिवी उत द्यौः॥

(ऋ० सं० अ० १ अ० ८ व० ७)

अद्योदये सति रवेर्दीप्ता हे सूर्यरश्मयः।
गर्ह्यात्पापात्तु निष्कृष्य यूयं रक्षत नः परम्॥
एतत्सूक्तेनार्थितं यन्मित्राद्यास्तदवन्तु नः॥ १२७॥

अद्या देवा इति। हे देवा द्योतमानाः सूर्यरश्मयोऽद्यास्मिन्काले सूर्यस्याऽऽदि-पस्योदिता, उदितावुदये सति, इतस्ततः प्रसरन्तो यूयमस्मानवद्याद्गर्ह्यादंहसः पापा-न्निष्पिपृत निष्कृष्य पालयत। यदिदमस्माभिरुक्तं नोऽस्मदीयं तन्मित्रादयः षड्देवता मामहन्तां पूजयन्तु। अनुमन्यन्तां रक्षन्त्विति यावत्। मित्रः प्रमीतेर्हिंसायास्त्राताऽ-हरभिमानी देवः। वरुणोऽनिष्टानां निवारयिता रात्र्यभिमानी देवः। अदितिरखण्ड-

नीया, अदितिरदीना वा देवमाता, सिन्धुः स्यन्दनशीलोदकाभिमानिनी देवता पृथिवी भूलोकाधिष्ठात्री देवता । द्यौर्द्युलोकाधिष्ठात्री देवता । उतशब्दः समुच्चये ॥ १२७ ॥

यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् ।
मिनीमसि द्यविद्यवि ॥ (ऋ० सं० अ० १ अ० २ व० १६)

कुर्वन्ति लोके वरुण प्रमादं प्रजाः कदाचिच्च यथा तथा वयम् ॥ १२८ ॥
दिने दिने देव यदेव कर्म विहिंसितं ते कृतवन्त एव ॥
तदेव साङ्गं कुरु देव कर्म प्रमादहीनं त्विति वाक्यशेषः ॥ १२९ ॥

यच्चिद्धीति । हे वरुण यथा लोके विशः प्रजाः कदाचित्प्रमादं कुर्वन्ति तथा वयमपि ते तव संबन्धि यच्चिद्धि यदेव किंचिद्व्रतं कर्म द्यविद्यवि प्रतिदिनं मिनीमसि प्रमादेन हतवन्तस्तदपि व्रतं प्रमादपरिहारेण साङ्गं कुर्विति शेषः ॥ १२८ ॥ १२९ ॥

मा नो वधाय हत्नवे जिहीळानस्य रीरधः ।
मा हृणानस्य मन्यवे ॥ (ऋ० सं० अ० १ अ० २ व० १६)

65927

अनादरकृतो हेतुस्त्वत्कर्तृकवधाय नः ।
विषयान्कुरु मे राजन्क्रुद्धस्य तव मन्यवे ॥ १३० ॥

मा नो वधायेति । हे वरुण जिहीळानस्यानादरं कृतवतो हत्नवे हन्तुः पापिहननशीलस्य तव संबन्धिने त्वत्कर्तृकाय वधाय नोऽस्मान्मा रीरधः संसिद्धान्विषयभूतान्मा कुरु । हृणानस्य हृणीयमानस्य क्रुद्धस्य तव मन्यवे क्रोधायास्मान्मा रीरधः ॥ १३० ॥

वि मृळीकाय ते मनो रथीरश्वं न संदितम् ।
गीर्भिर्वरुण सीमहि ॥ (ऋ० सं० अ० १ अ० २ व० १६)

प्रसादयामस्ते स्तोत्रैर्मनोऽस्माकं सुखाय च ।
प्रसादयति घासाद्यैः श्रान्तमश्वं रथी यथा ॥ १३१ ॥

वि मृळीकाय त इति । हे वरुण मृळीकायास्मत्सुखाय ते तव मनो गीर्भिः स्तुतिभिर्विसी(षी)महि विशेषेण बध्नीमः प्रसादयाम इत्यर्थः । तत्र दृष्टान्तः—रथी रथस्वामी संदितं सम्यक्खण्डितं दूरगमनेन श्रान्तमश्वं न, अश्वमिव यथा स्वामी श्रान्तमश्वं घासप्रसादादिना प्रसादयति तद्वत् ॥ १३१ ॥

परा हि मे विमन्यवः पतन्ति वस्यइष्टये।
वयो न वसतीरुप ॥ (ऋ० सं० अ० १ अ० २ व० १६)

वसुमज्जीवनस्याऽऽप्त्यै क्रोधहीना धियो मम।
वासदेशान्समीपेन प्रसरन्ति यथा वयः ॥ १३२ ॥

परा हि म इति। हे वरुण मे शुनःशेपस्य विमन्यवः क्रोधरहिता बुद्धयो वस्यइष्टयेऽतिशयेन वसुमतो जीवनस्य प्राप्त्यै परापतन्ति पराङ्मुखाः पुनरावृत्तिरहिताः प्रसरन्ति। हिशब्दः प्रसिद्धौ सर्वजनप्रसिद्धिमाह। परापतने दृष्टान्तः—वयो न। पक्षिणो यथा वसतीर्निवासस्थानानि उप सामीप्येन प्राप्नुवन्ति तद्वत् ॥ १३२ ॥

कदा क्षत्रश्रियं नरमा वरुणं करामहे। मृळीकायोरुचक्षसम् ॥ (ऋ० सं० अ० १ अ० २ व० १६)

अस्मत्सुखाय वरुणं कदा बहुदृशं क्रतौ।
आगतं करवामात्र नेतारं बलसेविनम् ॥ १३३ ॥

कदा क्षत्रेति। मृळीकायास्मत्सुखाय वरुणं कदा कस्मिन्काल आकरामहेऽस्मिन्कर्मणि आगतं करवाम। कीदृशं क्षत्रश्रियं बलसेविनं नरं नेतारमुरुचक्षसं बहूनां द्रष्टारम् ॥ १३३ ॥

तदित्समानमाशाते वेनन्ता न प्रयुच्छतः।
धृतव्रताय दाशुषे ॥ (ऋ० सं० अ० १ अ० २ व० १७)

हविर्दत्तवते यष्ट्रे इच्छन्तौ कृतकर्मणे।
समानं दत्तमस्माभिस्तदेव व्याप्नुतो हविः ॥
कदा मित्राय वरुणौ प्रमादं कुरुतो नहि ॥ १३४ ॥

तदित्सेति। धृतव्रतायानुष्ठितकर्मणे दाशुषे हविर्दत्तवते यजमानाय वेनन्ता कामयमानौ मित्रावरुणाविति शेषः। ता उभौ समानं साधारणं तदिदस्माभिर्दत्तं तदेव हविराशाते अश्नुवाते न प्रयुच्छतः कदाचिदपि प्रमादं न कुरुतः ॥ १३४ ॥

वेदा यो वीनां पदमन्तरिक्षेण पतताम्। वेद नावः समुद्रियः ॥ (ऋ० सं० अ० १ अ० २ व० १७)

नौकाया जलगामिन्याः पक्षिणां खेन गच्छताम् ।
पदं जानाति वरुणो बन्धनान्मोचयत्यलम् ॥ १३५ ॥

वेदा य इति । अन्तरिक्षेण पततामाकाशमार्गेण गच्छतां वीनां पक्षिणां वरुणो वेद पदं यो जानाति । तथा समुद्रीयः समुद्रेऽवस्थितो वरुणो नावो जले गच्छन्त्याः पदं वेद जानाति सोऽप्यस्मान्बन्धनान्मोचयत्विति शेषः ॥ १३५ ॥

**वेद॑ मा॒सो धृ॒तव्र॑तो॒ द्वाद॑श प्र॒जाव॑तः । वेदा॒ य उ॑प॒जाय॑ते ॥** (ऋ० सं० अ० १ अ० २ व० १७)

उत्पद्यमानान्वरुणस्तदा तदा चैत्रादिमासान्प्रजयाऽन्वितान्वा ॥१३६॥
धृतव्रतो वेत्ति च फाल्गुनान्तांस्त्रयोदशं चाधिकसंज्ञमप्ययम् ।
एतादृशं यस्य महत्त्वमस्ति बन्धात्स नो मोचयतां च राजा ॥ १३७ ॥

वेद मास इति । धृतव्रतः स्वीकृतकर्मविशेषो यथोक्तमहिमोपेतो वरुणः प्रजावतस्तदा तदेत्यद्यमानान्प्रजायुक्तान्वा द्वादश मासश्चैत्रादिफाल्गुनान्तान्मासान्वेद जानाति । यस्त्रयोदशोऽधिकमास उपजायते संवत्सरसमीपे स्वयमेवोत्पद्यते तमपि वेदेति वाक्यशेषः ॥ १३६ ॥ १३७ ॥

**वेद॒ वात॑स्य व॒र्त॒निमु॒रोर्ऋ॒ष्वस्य॑ बृह॒तः । वेदा॒ ये अ॒ध्यास॑ते ॥** (ऋ० सं० अ० १ अ० २ व० १७)

वायोश्चोरोर्वेत्ति मार्गं वरुणो विस्तृतस्य च ।
गुणाधिकस्य ये देवास्तिष्ठन्त्युपरि तानपि ॥
बन्धाद्दुःखकरात्तस्मात्सोऽमुक्तान्मोचयेच्च नः ॥ १३८ ॥

वेद वातस्येति । उरोर्विस्तीर्णस्य ऋष्वस्य दर्शनीयस्य बृहतो गुणैरधिकस्य वातस्य वायोर्वर्तनिं मार्गं वेद वरुणो जानाति । ये देवा अध्यासत उपरि तिष्ठन्ति तानपि वेद जानाति ॥ १३८ ॥

**नि ष॑साद धृ॒तव्र॑तो॒ वरु॑णः प॒स्त्या॒३॑स्वा । साम्रा॑ज्याय सु॒क्रतुः॑ ॥** (ऋ० सं० अ० १ अ० २ व० १७)

प्रजासु दैवीषु निषण्णवान्य आगत्य राजा सकलप्रजानाम् ।
साम्राज्यसिद्ध्यर्थमयं सुकर्मा बन्धाद्विमुक्तान्कुरुतां सदा नः ॥१३९॥

निषसादेति । धृतव्रतः पूर्वोक्तो वरुणः पस्त्यासु दैवीषु प्रजासु आ निष-

साद, आगत्य निषण्णवान् । किमर्थं प्रजानां साम्राज्यसिद्ध्यर्थं सुक्रतुः शोमनः क्रतुर्यस्य स निषसाद ॥ १३९ ॥

खण्डराजेन रचिता संध्यामन्त्रार्थदीपिका ।
विद्वज्जनांस्तोषयतु पराणुगुणतोषिणः ॥ १४० ॥
अनयाऽहं दीपिकया खण्डदीक्षितनामकः ।
नीराजयामि मल्लारेः पादपद्मद्वयं मुदा ॥ १४१ ॥

इति खण्डराजदीक्षितविरचिता बह्वृचसंध्या-
मन्त्रार्थदीपिका समाप्ता ॥

नाम्ना गुणैश्चापि शिवैव माता तातः शिवत्र्यम्बकयज्वनामा ।
मल्लारिदेवः कुलदैवतं मे श्रीकौशिकस्यास्ति कुले च जन्म ॥ १ ॥

इति श्रीगणेशदीक्षितात्मजत्र्यम्बकदीक्षिततनूजखण्डराजदीक्षितविरचिता
बह्वृचसंध्यामन्त्रार्थदीपिकाप्रभा समाप्ता ॥



ॐ तत्सद्ब्रह्मणे नमः ।

# *बह्वृचसंध्यापद्धतिभाष्यम् ।

अथ संध्यापद्धतिभाष्यं लिख्यते ।

संध्याया देशमाह—

" गृहे त्वेकगुणा संध्या गोष्ठे शतगुणा स्मृता ।
शतसाहस्रिका नद्यामनन्ता विष्णुसंनिधौ " ॥

संध्याकालमाह—

" उत्तमा तारकोपेता मध्यमा लुप्ततारका ।
अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता ॥
संध्यात्रयं तु कर्तव्यं द्विजेनाऽऽत्मविदा सदा ।
उभे संध्ये तु कर्तव्ये ब्राह्मणैस्तु गृहेष्वपि " ॥

अथाऽऽचमनप्रकारो लिख्यते—

" प्रक्षाल्य पाणिपादौ च शिखां बद्ध्वा सुखासने ।
हृदये संस्मरेद्विष्णुं तत आचमनं चरेत् ॥
सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ।
नोच्छिष्टं तत्पवित्रं स्याद्भुक्तोच्छिष्टं तु वर्जयेत् ॥
समौ द्वौ स्थौल्यदैर्घ्याभ्यां समौ प्रादेशसंमितौ ।
[ दर्भौ ] पवित्रे [वि]ज्ञेये दैवे कर्मणि चोदिते ॥
मुक्त्वा कनिष्ठिकाङ्गुष्ठौ माषमात्रं जलं पिबेत् ।
अन्तर्जानुः शुचौ देशे उपविष्ट उदङ्मुखः ॥
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ।
कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ॥
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् " ।

करमध्ये सोमाग्नितीर्थं च ।

" अङ्गुष्ठाग्रं समाकुञ्च्य मध्यमामध्यपर्वसु ।
योजयित्वाऽऽचमेत्तत्र स वै गोकर्ण उच्यते ॥

---

* अस्य निर्मातुर्नाम न ज्ञायते ।

पूर्वे आचम्य अमृतं सोमपानं तथोत्तरे ।
पश्चिमे पुनराचम्य दक्षिणे रुधिरं भवेत् ॥
होमे भोजनकाले तु संध्ययोरुभयोरपि ।
आचान्तः पुनराचामेदन्यत्र तु सकृत्सकृत् ॥
अपि वारि नखैः स्पृष्ट्वा य आचामति वै द्विजः ।
सुरां पिबति स व्यक्तं यमस्य वचनं यथा ॥
कांस्यैरायसपात्रैश्च त्रपुसीसकपित्तलैः ।
आचान्तः शतकृत्वोऽपि न शुध्यति कदाचन ॥
संध्यार्थे भोजनार्थे [वा] पित्र्यार्थे वा तथैव च ।
शूद्र(न्य)हस्तेन पा(नाऽऽ)चामेज्जपादिहवनेषु च ॥
वामहस्तस्थिते दर्भे दक्षिणेनाऽऽचमेद्यदि ।
रक्तं तु तद्भवेत्तोयं पीत्वा चान्द्रायणं चरेत् " ॥

---

अथ संध्यार्थो लिख्यते ।

प्राची संध्या काचिदन्तर्निशायाः
प्रज्ञादृष्टेरञ्जनश्रीरपूर्वा ।
वक्त्री वेदान्पातु मे वाजिवक्त्रा
वागीशाख्या वासुदेवस्य मूर्तिः ॥ १ ॥

" अहरहः संध्यामुपासीत यः संध्यामुपासते ब्रह्मैव तदुपासते " इति [वीप्सा] श्रुतेः

" यः संध्यां कालतः प्राप्तामालस्यादतिवर्तते ।
सूर्यहत्यामवाप्नोति उलूकत्वमियात्सदा " इत्यग्निवचनम्(ने)

" योऽन्यत्र कुरुते यत्नं धर्मकार्ये द्विजोत्तमः ।
विहाय संध्यामणतिं स याति नरकायुतम् " ॥

इति कूर्मपुराणवचनात्प्र( वे च प्र )त्यवायश्रवणात्सं( ब्ध सं )ध्यावन्दनमावश्यकम् ।

तत्कालविशेषश्च—

" मुहूर्तमुदयादर्वाग्द्विमुहूर्तमतः परम् ।
संध्याकालस्तु विज्ञेयो विपरीतस्तु पश्चिमः " इति ॥

" अह्नो रात्रेस्तु यः संधिः सूर्यनक्षत्रवर्जितः ।
सा तु संध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः " ॥

साङ्गायाः संध्यायाः फलमाह यमः—

“ संध्यामुपासते ये तु सततं संशितव्रताः ।
विधूय पापं ते यान्ति ब्रह्मलोकं सनातनम् ” ॥

अकरणे प्रत्यवायमाह दक्षः—

“ संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते नित्यं न तस्य फलभाग्भवेत् ” ॥

गोभिलोऽपि—

“ संध्या येन न विज्ञाता संध्या येनानुपासिता ।
जीवन्नेव भवेच्छूद्रो मृतः श्वा चाभिजायते ” इति ॥

“ गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने ।
सरस्वती च सायाह्ने सैव संध्या त्रिषु स्मृता ॥
प्रतिग्रहान्नदोषात्तु पातकादुपपातकात् ।
गायत्री प्रोच्यते तस्माद्गायन्तं त्रायते यतः ॥
सवितृद्योतनाच्चैव सावित्री परिकीर्तिता ।
जगतः प्रसवित्री वा वाग्रूपत्वात्सरस्वती ॥
गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका ।
सरस्वती तथा कृष्णा उपास्या वर्णभेदतः ॥
गायत्री ब्रह्मरूपा या सावित्री रुद्ररूपिणी ।
सरस्वती विष्णुरूपा उपास्या मूर्तिभेदतः ” ॥

उपास्या ध्येया ।

एता देवता वर्णनामविशिष्टाः प्रतिपादकमन्त्रस्याभिमानिन्य एव । प्रतिपाद्यस्तु सविता मान्त्रवर्णिकः । सोऽपि सम्यग्ध्येयत्वात्संध्याशब्दवाच्यः । ध्यै चिन्तायाम् । तथा—“ संध्यामुपासीत ” इति श्रुतेः । संध्योपासनं नाम संध्याख्यसवितृदेवताध्यानमेव । सवितृशब्दस्य मुख्यार्थः सूर्यान्तर्गतः श्रीहरिरेव । तस्यैव मुख्यतागुणैस्तत्त्वाद्याप्तत्वात्सकलजगन्निर्मातृत्वाद्वरणीयत्वाद्भरणगमनकर्तृत्वात्क्रीडादिगुणविशिष्टत्वाद्बुद्ध्यभिमानिरमाब्रह्मादिप्रेरकत्वाच्च ।

तथा च श्रुतिः—“ उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुते ” इति ।

अस्यार्थः—उद्यन्तमुदयं प्राप्नुवन्तमस्तं यन्तमस्तमयं प्राप्नुवन्तमादित्यं सूर्यमभिध्यायन्सम्यक्चिन्तयन् । एवमरुणोदये सूर्यशत्रवः सन्ति ते गाय-

ऽयस्त्रेण सायं प्रातः प्रदत्तेन हता अभूवन्क्षयं प्राप्नुवन्, इत्येवं विद्वान्ब्राह्मण उभयकालेऽपि प्रदक्षिणं कुर्वन्सकलं भद्रमश्नुते सकलं मङ्गलं मोक्षाख्यमश्नुते भुङ्क्ते प्राप्नोतीत्यर्थः । न केवलं मङ्गलं प्राप्नोतीत्येतावदेव । किंत्वसावादित्यो ब्रह्मास्मिन्सूर्ये मण्डले योऽयं नारायणस्तिष्ठतीति जानन्ब्राह्मणो ब्रह्मैव सञ्श्रीनारायणसदृश एव सन्ब्रह्म परब्रह्म श्रीनारायणमप्येति प्राप्नोति मुक्तो भवतीत्यर्थः । योऽधिकार्येवंभूत इति वेद जानाति स ऐहिकमङ्गलादिप्राप्तिः पारत्रिकमोक्षं च प्राप्नोति मुक्तो भवतीत्यर्थः । यो यदिति यावत् । इति मन्त्रार्थः ।

अत्र चाऽऽदित्यध्यानेन सकलं भद्रमिति पूर्णसुखात्मको मोक्षः श्रूयते । स च न प्रसिद्धादित्यज्ञानात्संभवति, तस्य ब्रह्मज्ञानैकसाध्यत्वात् । ' तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इति तैत्तिरीयमन्त्रादेव । अतो विरोधपरिहारार्थं श्रुतिविशेषः प्रवृत्तः—"असावादित्यो ब्रह्म" इति । असौ परिदृश्यमानमण्डलवर्त्यादित्यनामा ब्रह्मगुणपरिपूर्णो विष्णुरेव । एवं विद्वाञ्जानन्ब्राह्मणः संध्यादिकर्म कुर्वन्नन्तःकरणशुद्धिद्वारा विद्वाञ्श्रवणादिरूपः परोक्षज्ञानी भूत्वा ततश्च विद्वानपरोक्षज्ञानी भूत्वा विष्णुप्रसादाद्ब्रह्माप्येति प्राप्नोति। कीदृशः—प्रागपि ब्रह्मैव सञ्शुद्धरूपसदानन्दादिगुणवानेव। किंतु—अविद्याकारणनिमित्तान्यथाभावपरिहारार्थमेव कर्माद्यनुष्ठानम्। यस्तु तमोयोग्यः स तथाविधो न भवति अतस्तत्फलभागपि न भवतीति । ब्रह्मप्राप्तौ च सकलं भद्रमश्नुते—"किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने" इत्युक्तत्वादिति भावः। न तु असावादित्यो ब्रह्मेति सामानाधिकरण्यात्तस्यैव ब्रह्मत्वं प्रतीयते। न तु तदन्तर्गतस्य । न च ध्येयः सदेति ध्यानश्लोकात्तत्त्वं श्रुत्यपेक्षया स्मृतेर्दुर्बलत्वादिति चेत्। न। "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इति [स्मृते]स्तस्यास्तदर्थनिर्णायकत्वात् । किंच स्फुटमत्र पुण्डरीकाक्षत्वसर्वदोषोद्गतत्वादिलिङ्गैर्विष्णुरेवाऽऽदित्यान्तर्गतः प्रतीयते। प्रसिद्धादित्यस्य—" भीषोदेति सूर्यः ' इति मन्त्राद्भयादिदोषप्रतीतेर्न सर्वदोषविदूरत्वम् । आदित्यत्वेनाऽऽदित्यस्थत्वं चायुक्तमिति । तस्माद्ध्येयत्वात्संध्याशब्दवाच्यस्याऽऽदित्यान्तर्गतस्य विष्णोर्ध्यानमेव संध्याशब्दार्थः प्रधानकर्मेति सिद्धम् । गायत्र्यादिशब्दवाच्योऽपि विष्णुरेव ।

तत्र केशवादिनाम्नामयमर्थः—

केशवः— कश्चेशश्च केशौ तौ वर्तयतीति । को ब्रह्मा । ईशो महारुद्रः । तौ ...

तथा च हरिवंशे कैलासयात्रायां रुद्रेणोक्तम्—

"को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गसंभूतावतः केशवनामवान्" इति ।

अथवा—प्रशस्ता उत्तमाः केशा अस्य सन्तीति वा । केशाभ्यां शुक्लकृष्णकेशाभ्यामवताररूपेण वर्तत इति केशवः ॥ १ ॥

नारायणः— आरा दोषास्तद्विरुद्धा गुणा नारास्तेषामयनमिति दोषविरुद्धगुणाश्रयत्वाद्वा । अराणां दोषाणामयनं न भवतीति दोषाश्रयो न भवति दोषगन्धविधुर इति वा । दोषरहिता नारा वेदाः प्रतिपाद्यतया तदयनत्वात्सदागमैकविज्ञेयत्वाद्वेदप्रतिपाद्यत्वाद्वा । नरसंबन्धि नारमयतेऽनेनेति नराणां संबन्धीनि जन्मादीनि तत्कर्तृत्वसंबन्धेन तदयनत्वाज्जगज्जन्मादिकर्तृत्वाद्वा । नारमणमयनं येनेति नारमणवत्त्वाद्वा निर्दोषवेदोत्पन्नत्वान्निर्दोषवेदोत्पन्नज्ञानविषयत्वाद्वा । नारं ज्ञानं विषयतया तदयनत्वाद्वा । नरसंबन्धि नारं फलं दातृतया तदयनत्वाद्वा । मनुष्यसंबन्ध्यैहिकपारत्रिकफलदातृत्वाद्वा । नित्यलक्ष्मीसहितत्वात्तदाश्रयत्वाद्वा । आलस्यरहितत्वाद्वा । नाशरहितत्वाद्वा । अविधुरत्वादरतिरहितत्वात्क्षयरहितत्वाद्वा । नारा मुक्तास्तदाश्रयत्वाद्वा । नारा आपस्ता अयनं यस्येति उदकाश्रयत्वादुदकजनकत्वान्नारायणः ।

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः" ॥ २ ॥

माधवः— माया लक्ष्म्या धवः पतिरिति लक्ष्मीपतित्वाद्वा । मधुविद्याविषयत्वाद्वा । मधुकुले प्रादुर्भूतत्वाद्वा । मधुरापत्तनेऽवतीर्णत्वाद्वा माधवः । मा लक्ष्मीस्तां धुनोति कम्पयतीति माधवः ॥ ३ ॥

गोविन्दः— गामविन्दत्समुद्रमग्नां पृथ्वीप्राप्तत्वाद्वा । गां वाणीं विन्दत इति वा । गोभिर्वेदवाणीभिरिन्द्रादिभिर्विन्दते स्तोत्रितो भवतीति वा । गोभिर्वेदैर्वेद्य इति वेदवेद्यत्वात् । वेदेन प्रतिपाद्यत्वात्, गोविन्दः ।

"नष्टां वै धरणीं पूर्वमविन्दद्धि गुहागताम् ।
गोविन्द इति तेनाऽऽह देवैर्वाग्भिरभिष्टुतः ॥
गौरेषा तु तथा वाणी तां तु विन्दयते भवान् ।
गोविन्दस्तु ततो देवो मुनिभिः कथ्यते भवान् ॥

अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः ।
गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वतम् ॥
गोभिरेव यतो वेद्यो गोविन्दः स उदाहृतः ॥ ४ ॥

विष्णुः— वेवेष्टीति सर्वजगद्व्याप्तत्वाद्वा विशिष्टबलचेष्टस्वभावत्वाद्वा विष्णुः । तथा च तापनीयश्रुतिः—“ अथ कस्मादुच्यते महाविष्णुरिति यस्मात्स्वमहिम्नः सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतानि व्याप्नोति व्यापयति ” इति । “ णकारो बलं षकारः प्राण आत्मा ” इति श्रुतिः ॥ ५ ॥

मधुसूदनः— मधुं सूदयतीति मधुनामकदैत्यसंहारकत्वान्मधुसूदनः ॥ ६ ॥

त्रिविक्रमः— त्रिविधः क्रमः पादविक्षेपो यस्येति । “ त्रीणि पदा विचक्रमे ” इति श्रुतिः । त्रिपदा सकलजगदाक्रान्तत्वात् । त्रिषु लोकेषु विक्रमो यस्येति वा । त्रीन्वेदानतिक्रामति तदगोचरो भवतीति वा ।

तथा च हरिवंशे—

“ त्रिरित्येवं त्रयो वेदाः कीर्तिता मुनिसत्तमैः ।
क्रमन्नेतान्यतस्त्वं हि त्रिविक्रम उदाहृतः ” इति ॥

त्रिषु लोकेषु विना पक्षिणा गरुडेन सार्कं क्रामसि गरुडवाहनः संस्त्रिलोकसंचारं करोषीति यावत् । त्रिविक्रमः ॥ ७ ॥

वामनः— वामं नयतीति वामनः सौन्दर्यं प्रापयतीत्यर्थः । लक्ष्मीं वामेन नयतीति वा वामभागे लक्ष्मीं धरतीत्यर्थः । वामैर्मङ्गलरूपैर्वेदादिभिर्नीयते गीयत इति वामनः ॥ ८ ॥

श्रीधरः— श्रियं धरतीति श्रीधरो लक्ष्मीधर इत्यर्थः ॥ ९ ॥

हृषीकेशः— हृषीकाणामिन्द्रियाणामीशो हृषीकेशः ॥ १० ॥

पद्मनाभः— पद्मं कमलं नाभौ यस्येति पद्मनाभः ॥ ११ ॥

दामोदरः— दामोदरे यस्येति दामोदरः । मात्रा दाम्नोदरे बद्धत्वादित्यर्थः ॥ १२ ॥

संकर्षणः— सम्यक्पापानि दुःखानि कर्षतीति संकर्षणः । सम्यक्पापनिर्मूलनकर्तृत्वादित्यर्थः ॥ १३ ॥

वासुदेवः— वसन्ति भूतानि यस्मिन्निति वासु । दीव्यतीति देवः । वासुश्चासौ देवश्च वासुदेवः । सकलभूताधारकत्वात् । जयशीलत्वादित्यर्थः । वश्चासावसुश्चासौ देवश्च वासुदेवः । वः, बलरूपः । असुः प्राण-

रूपः । सर्वचेष्टत्वादेवः क्रीडादिगुणयुक्तः सकलबलचेष्टकत्वात्क्रीडादिगुणविशिष्टत्वाद्वासुदेवः ॥ १४ ॥

प्रद्युम्नः— प्रकृष्टं द्युम्नं प्रकाशो यस्येति सकलजगत्प्रकाशत्वादित्यर्थः । प्रकर्षेण द्योतयतीति वा । स्वयंज्योतीरूपत्वादित्यर्थः । प्रकृष्टं द्युम्नं द्रव्यं यस्येति वा प्रद्युम्नः । प्रकृष्टद्रव्यप्रद इत्यर्थः ॥ १५ ॥

अनिरुद्धः— न निरुध्यतेऽसावनिरुद्धः । परनिर्बन्धशून्यत्वादित्यर्थः । अनो मुख्यप्राणः सेव्यतया रुध्यतेऽसौ वा । अनिनो मुख्यप्राणदासास्तैः सेव्यतया स्वहृदि रुध्यत इति वा । अनिभिर्भक्तै रुध्यत इति वा । अनिरुद्धः ॥ १६ ॥

पुरुषोत्तमः— पुरुषाभ्यां क्षराक्षराभ्यामुत्तमो वा ।

" ब्रह्मशिवसुरेन्द्राद्याः शरीरक्षरणात्क्षरः ।
लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः " इति ॥

यद्वा पूर्णा गुणाः षड्यस्येति पुरुषः । स चासावुत्तमश्चेति पुरुषोत्तमः । समग्रैश्वर्यादिषड्गुणपूर्णत्वे सत्युत्तम इत्यर्थः । पुरुषु जीवेषु [ शेते ] व्यापकत्वादिति पुरुषः । स चासावुत्तमश्च पुरुषोत्तमः ।

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानविज्ञानयोश्चैव (?) इत्येते षड्गुणाः स्मृताः" ॥१७॥

अधोक्षजः—अधः कृतान्यक्षजानि येनेति अधोक्षजः । इन्द्रियागम्य इति यावत् । इन्द्रियागोचरत्वात्पञ्चमहाभौतिकेन्द्रियागम्य इत्यर्थः ॥ १८ ॥

ना(न)रसिंहः— नरश्चासौ सिंहश्चेति नरसिंहः । नररूपत्वे सति सिंहत्वादिति भावः । अथवाऽन्येन न रीयते न क्षीयत इति नरो हिरण्यकशिपुस्तं हिनस्तीति नरसिंहः । हिरण्यकशिपुसंहारकत्वादिति भावः । सिंहशब्दस्य पृषोदरादित्वाद्वर्णविपर्ययः ॥ १९ ॥

अच्युतः— स्वरूपसामर्थ्यादेव प्रच्युत्यभावात्स्वपदच्यवनाभावाद्वा न च्यवत इत्यच्युतः । च्युङ् च्यवन इत्यतः कर्तरि क्तः । स्वरूपसामर्थ्यायुक्तत्वाद्वा स्वपदच्यवनाभावादित्यर्थः ॥ २० ॥

जनार्दनः— जनान्बल्यादीनर्दयतीति याचत इति वा । सुजनैः पुरुषार्थं याच्यत इति वा । दुष्टजनानर्दयतीति वा । जनान्सर्वजनानर्दयति प्रलये नाशयतीति वा । जनानां जन्ममरणान्यर्दयतीति वा । जनार्दनः ॥ २१ ॥

उपेन्द्रः— इन्द्रावरज इति वा । इन्द्रादाधिक्येन वर्तत इत्युपेन्द्रः । उपोऽधिके चेति सौत्रज्ञापकादुपशब्द आधिक्यार्थकोऽपि ज्ञेयः । इन्द्रानुजत्वादिन्द्रादाधिक्येन वर्तत इति ।

तथा च हरिवंशे कृष्णं प्रतीन्द्रवचनम्—

" ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः ।
उपेन्द्र इति कृष्ण त्वामाख्यान्ति भुवि देवताः " ॥२२॥

हरिः— भक्तानां पापं हरतीति वा दैत्यशिरांसि हरतीति वा भक्तजनचित्तं हरतीति वा सर्वयत्नहारित्वाद्वा भक्तानां चित्तं हरतीति वा हरिः ॥ २३ ॥

श्रीकृष्णः— कंसादीनां कर्षणकर्तृत्वान्नियमनादिना सकललोककर्षणाद्वा कृष्णः । तथा च कौर्मे—

" यतः कर्षसि देवेश नियम्य सकलं जगत् ।
अतो वदन्ति मुनयः कृष्णस्त्वां ब्रह्मवादिनः " इति ॥

यद्वाऽऽनन्दपूर्णत्वात्कृष्णः ।

" कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते " ॥

इति वचनात् ॥ २४ ॥

अथ प्राणायाममन्त्रार्थः ।

प्रत्येकनिरवधिकानन्तगुणपूर्णत्वादोंकारशब्दवाच्यो हरिः । ॐ भूरिति प्राणायाममन्त्रस्य नारायण ऋषिः परमात्मा सवितृनामकः श्रीनारायणो देवता । गायत्री छन्दः । प्राणायामे विनियोगः । ॐ प्रवेशार्थस्यावतेः । निरुक्ते च—" ओमिति पुनः काऽस्य निरुक्तिरिति । अवतिर्नामायं धातुर्गतिकर्मा प्रवेशकर्मा च" इति । तथा चावति प्रविशति गुणानिति वा, अव्यते प्रविश्यते गुणैरिति वा, ॐ । उभयथाऽप्यनन्तगुणपरिपूर्णत्वमोंकारार्थतया लभ्यते ।

तदुक्तम्—" ॐतत्त्ववाची ह्योंकारो वक्त्यसौ तद्गुणोततताम् ।
स एव ब्रह्मशब्दार्थो नारायणपदोदितः " इति ॥

प्रत्येकनिरवधिकानन्तगुणपूर्णत्वादोंकारशब्दवाच्यः परमात्मा पूर्णत्वादोमित्यर्थः ।

भूः,

भवतेः क्विपि भूरिति रूपम् । तथा च भूरिति पूर्ण इत्यर्थः । यद्वा भवन्त्यस्माद्भूतानीति भूः । अधिकरणे क्विप् । सर्वभूतोत्पादक इत्यर्थः । सकलजग-

दुत्पादकत्वाद्भूः । भूतिवरत्वाद्भूः । लक्ष्मीपतित्वाद्भूः । निरवधिकैश्वर्ययुक्तत्वाद्वा भूः ।

## भुवः,

भावयति स्थापयति विश्वमिति भुवः । अन्तर्भावितण्यर्थादसुनि गुणाभावश्छान्दसः । यद्वा भावनाज्जगदुत्पादनाद्भुवः । भवतेरेवान्तर्णीतण्यर्थस्य कप्रत्यये रूपम् । अथ वा भवत्यस्मिञ्जगति भूर्महालक्ष्मीस्ततो वरो लक्ष्मीश्रेष्ठ इत्यर्थः । अनन्तसुखरूपत्वाद्वा भुवः । जगदुत्पादकत्वाद्वा भुवः ।

## स्वः,

सुवो वा । सुखरूपत्वात्स्वः । स्वःशब्दो हि सुखवाची प्रसिद्धः ।
तदुक्तम्—" पूर्णो भूतिवरोऽनन्तसुखो यद्व्याहृतीरितः " इति ।
[ यद्वा सुवरिति ] पाठस्तत्रार्थः—सुष्ठु वरणीयत्वात्सुवः ।

स्वित्यानन्दः समुद्दिष्टो वरिति ज्ञानमुच्यते ।
मुक्तिदानेन तद्दानात्सुवरस्य पदद्वयम् ॥

दक्षिणं सव्यमिति । आनन्दज्ञानरूपत्वात्सुवः । भगवद्दक्षिणसव्यपादयोरानन्दज्ञानरूपत्वात्तत्पादभजकानामानन्दज्ञानप्रदत्वाद्भगवतो दक्षिणसव्यपादौ सुवरित्युच्येते ॥

## महः,

मह पूजायाम् । अस्मादसुनि महः पूज्य इत्यर्थः । सर्वोत्कृष्टत्वेन पूज्यत्वान्मह इत्युच्यते ॥

## जनः,

जन जनने । तप आलोचने । आभ्यां कर्तर्यसुन् । तथा च सर्वजननकर्ता, आलोचनकर्ता चेति जनस्तपःशब्दाभ्यां लक्ष्यते । सकलजगज्जननकर्तृत्वाज्जनः ॥

## तपः,

सर्वविषयकालोचनकर्तृत्वात्तपः ।



## सत्यम्,

उत्तमज्ञानानन्दरूपत्वात्सत्यम् ।
तदुक्तम्—" सच्छब्द उत्तमं ब्रूयादानन्दं तिति वै वदेत् ।
येति ज्ञानं समुद्दिष्टं पूर्णानन्ददृशिस्ततः " इति ॥

सत्यशब्दोदित इत्यादितन्त्रभागवतवचनात्सत्यज्ञानानन्दस्वरूपत्वात्सत्यम् । यद्वा सत्यं कालत्रयाबाध्यम् । भूतभविष्यवर्तमानरूपकालत्रयेऽप्यबाध्यत्वात्सत्यमित्युच्यते ॥

तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि । धियो॒ यो नः॑ प्रचो॒दया॑त् ॥ (ऋ० सं० अ० ३ अ० ४ व० १०)

यो भर्गो नो धियः प्रचोदयात् । देवस्य सवितुस्तद्वरेण्यं धीमहि । यः सवितृनामकसूर्यमण्डलमध्यवर्ती नारायणो जगद्भरणधारणपोषणकर्तृत्वाज्ज्ञानगमनकर्तृत्वादित्यर्थः । गमनकर्तृत्वात्संसारदाहकर्तृत्वाद्वा भर्गो नोऽस्माकं धियो बुद्धीः प्रचोदयात्प्रेरयेत् । तस्य देवस्य क्रीडादिगुणविशिष्टस्य सवितुर्जगत्प्रसवकर्तुर्नारायणस्य तनोतीति तद्व्याप्तं वरेण्यं श्रेष्ठं भजनीयं रूपं वयं धीमहि ध्यायेम चिन्तयामः । ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् । अनन्तगुणपरिपूर्णत्वादोम् । आ सम्यक्पालनकर्तृत्वादापः । अनन्ततेजोनिधित्वेन स्वप्रकाशरूपत्वाज्ज्योतिः । साररूपत्वात्सारभोक्तृत्वात्सुखरूपत्वाद्रसः । नित्यमुक्तत्वान्मरणरहितत्वादमृतम् । गुणपूर्णत्वाद्ब्रह्म । पूर्णत्वात्सर्वभूतोत्पादकत्वाद्भूतिवरत्वाल्लक्ष्मीपतित्वान्निरवधिकैश्वर्ययुक्तत्वाद्भूः । विश्वस्थापकत्वाज्जगदुत्पादकत्वान्महालक्ष्मीश्रेष्ठत्वादनन्तसुखरूपत्वाद्भुवः । सुखस्वरूपत्वान्मुक्तप्राप्यत्वात्स्वः । ईदृग्रूपं ब्रह्म श्रीनारायणस्वरूपम् । अङ्गीकुर्वन्ध्यायामीत्यर्थः । इति प्राणायाममन्त्रार्थोऽनुसंधेयः । ॐ गुणपूर्णो विष्णुर्भूर्जगदाधारो भूत्वा वरो भुवः सुष्ठु वरणीयत्वात्सुवः । पूज्यत्वान्महः । जगदुत्पत्तिं नयतीति जनः । ज्ञानरूपत्वात्तपः । उत्तमानन्दज्ञानरूपत्वात्सत्यम् । "तत्र तत्र स्थितो विष्णुस्तत्तन्नाम्नोच्यते बुधैः" इत्याद्युक्तरीत्या सत्यलोकादिस्थितत्वात्तदधिपत्वात्तत्तच्छब्दवाच्यः । एतादृशः क्रीडादिगुणविशिष्टस्य सृष्ट्याद्यष्टकर्तुर्नारायणस्य व्याप्तं वरेण्यं भजनीयं भारतिज्ञानरूपं वयं धीमहि चिन्तयामः । तद्रूपं मे धियो धीर्ज्ञानानि प्रेरयेत्स्वविषयिणीः कुर्यात् । ओमादिशब्दवाच्यो यो विष्णुस्तस्य भर्ग उद्दिश्य सर्वैः स्तुत्यस्य, अत एव तदर्थसकलवेदार्थरूपसूत्रभारतादिग्रन्थकर्तुर्ब्रह्मादिभिर्वरेण्यं वरणीयं "स व्यासो मनुपैवि(?)सोऽधस्तात्स उपरिष्टात्स दक्षिणात्सोत्तरात्" इत्यादिश्रुतेर्व्याप्तं रूपं वेदव्यासाख्यमिति ध्यायेम । तद्रूपं नो धियो ज्ञानसाधनेन्द्रियाणि "स्खलन्मनः कृष्णपदारविन्दयोः" इत्याद्युक्तरीत्या स्वविषयाणि

करोत्विति । स एवाऽऽपः, ज्योतिः, रसः, अमृतं, ब्रह्म, भूर्नामा(ना)स्फूर्ति-रूपत्वात् । भूरिवीर्यम् । ततो भुवः । सुवः सुबलरूपत्वात् ।

आपो हि ष्ठेति तृचस्यायमर्थः ।

अथ प्रथमा—

आपो हि ष्ठा मयोभुवस्ता नं ऊर्जे दंधातन ।
महे रणाय चक्षसे ॥ (ऋ० सं० अ० ७ अ० ६ व० ५)

भो आपोऽब्देवता अथवा—आ सम्यक्पालनकर्तृत्वान्नारायणमूर्तयो वारि-मूर्तयो नाम संनिधानपात्राः । यस्मात्कारणाद्या यूयं नोऽस्माकं मयोभुवः, मयः सुखं भावयन्ति साधयन्तीति मयोभुवः सुखकर्त्र्यः सुखदात्र्यः । ष्ठा, इति स्थ भवथ भवध्वम् । मय इति सुखनाम । तथा च निघण्टुः—"सुखं मयः" इति । या अस्माकं सुखकर्त्र्यो भवत ता यूयम् "अनेन प्राणाः" इत्यादिश्रुत्याऽन्नदा-तुर्महाफलश्रवणात् । अथवा बलेन दुष्टमर्दनसज्जनसंरक्षणकर्तुश्च महाफलश्रव-णात् । अथवोर्जशब्दवाच्याय परमात्मने भगवत्प्रसादाय वा ता भवत । यूयं नोऽस्माकमूर्जेऽन्नाय बलाय वा । अथवा—ऊर्जनीयत्वादूर्जशब्दवाच्याय पर-मात्मने वा दधातन स्थापयत । कस्मै प्रयोजनाय महे रणाय महे महते । चतुर्थ्याः लोपो, आदेशः, पूज्याय । रणाय रमणीयाय चक्षसे दर्शनाय । अथवा दर्शनी-याय । अन्नदानपुरःसरं भवत्प्रसादेन महतां सच्छास्त्रमुपदिशामीति भावः ।

अथ द्वितीया—

यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥ (ऋ० सं० अ० ७ अ० ६ व० ५)

भो आपो भो उदकाभिमानिन्यो देव्यो वो युष्माकं स्वभूतो यो रसः शिवतमः सुखतमः स्वादुतम इत्यर्थः । अथवा यो वः शिवतमोऽतिशयेन कल्या-णरसो ज्ञानं परोक्षापरोक्षरूपं तस्य तस्मै, इहामुकलोके नो भाजयत रसो ज्ञानं भगवद्विषयं वा कुरुत । परमात्मपक्षे तु—भो आपोऽब्देवतान्तर्गतभगवन्मूर्तयो यो वो रसोऽनन्तरूपं शिवतमोऽतिशयेन कल्याणस्वरूपं रसं भगवत्स्वरूपं तस्य तस्मै, इहास्मिँल्लोके नोऽस्मान्भाजयत कुरुत । तत्र दृष्टान्तः—उशतीः कामय-माना नवप्रसूता मातरः स्वपुत्रान्स्तन्यादिदातृत्वेन यथा भावयन्ति संरक्षयन्ति तथा नो दिव्यरसभाजिनो भोक्तॄन्कुरुत ।

अथ तृतीया—

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥ ( ऋ० सं० अ० ७ अ० ६ व० ५ )

हे आपस्तस्मै नाम पूर्वप्रसिद्धरसं परमात्मरूपं योदिश्यारमत्यर्थमत्यर्थिनः सन्तो वयं वो युष्मान्गमाम गच्छाम । तं कम् । तादृशपूर्वोक्तरसरूपं सुखरूपम् । कस्मै प्रयोजनाय । यस्य पापरूपरसस्य क्षयाय क्षिप्रं वो युष्मान्गमाम । हे आपस्तस्मिन्निवासे जिन्वथोत्पादयथ । तादृशनिवासभागिनः कुरुत । पापविनाशाय युष्माञ्शरणं गच्छाम इत्यर्थः । अथ नोऽस्माञ्जनयथ पुत्रपौत्रादिजननेन प्रजनयथेत्यर्थः । अथवा वो यूयं दर्शनादिना यस्याज्ञानादिपापस्य क्षयाय नाशाय जिन्वथोत्पन्नास्तत्पापं क्षपयित्वाऽरम् , अं ब्रह्माणं रमयतीत्यरस्तस्मै तं प्रसिद्धं विष्णुमपरोक्षतया गमाम गच्छाम । ततो यस्य विष्णोः क्षयाय वैकुण्ठाय नो जिन्वथ तत्र च न आनन्दादीञ्जनयथ प्रापयथ ॥

सूर्यश्चेति मन्त्रस्य नारायण ऋषिर्हिरण्यगर्भ ऋषिर्वा । सूर्यो देवता । अनुष्टुपूछन्दः ।

सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः ।
पापेभ्यो रक्षन्ताम् । यद्राऽया पापमकार्षम् ।
मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना ।
रात्रिस्तदवलुम्पतु । यत्किंच दुरितं मयि । इद-
महं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥
( आ० गृह्यप० अ० १ )

सूर्यश्चेति मन्त्रस्यायमर्थः—सूरिभिः प्राप्यत्वाद्यः परमात्मा नारायणः प्रसिद्धः सूर्यो वा । यश्च मन्युः, मन ज्ञान इति धातोर्मन्युर्नरसिंहः क्रोधाभिमानी देवो रुद्रो वा । ये च मन्युपतयः क्रोधाभिमानिनो देवस्य नियामका ब्रह्माद्याः सर्वे ते देवा मन्युकृतेभ्यः । मन्युपदं कामादेरुपलक्षकम् । कामादिपूर्वकं कृतेभ्यः पापेभ्यो मा मां रक्षन्तां पापविनाशेन पालयन्तु । किंच—यद्राऽया, सप्तम्यर्थे तृतीया । पापमकार्षं कृतवानस्मि। मनसा बुद्ध्यादिना वाचाऽनृतभाषणदुरुक्त्यादिना । हस्ताभ्यां दुष्टप्रतिग्रहसत्पीडनादिना । पद्भ्यां प्राणिहिंसागोब्राह्मणपादस्पर्शादिना । उदरेण, अभक्ष्याभक्षणभोजनादिना । शिश्ना शिश्नेन । सुपां सुलुगिति डादेशः परस्त्रीगमनादिना । यत्किंचिद्दुरितं, सर्वत्रा-

न्वेति । मया कृतं यत्किंचिद्दुरितम् । अथवा मयि यत्किंचिद्दुरितं कर्ता यस्त-त्पि रात्रिनामकपरमात्मा रात्र्यभिमानिनी दुर्गा वा मननादिकृतं यत्पापं तदवलुम्पतु नाशयतु । इदं पापजननमुद्दिश्य कृतं मां चामृतयोनौ मोक्षकारणे परमात्मनि सत्ये(सूर्ये) त्रिकालाबाध्ये कालत्रयेऽपि बद्धत्वशून्येऽहं जुहोमि भस्मी करोमि । जीवस्य स्वरूपेण भस्मासंभवात्पापविशिष्टत्वेन भस्मीकरणं ज्ञातव्यम् । तथा च स्वर्गी ध्वस्त इत्यादिवद्विशेषणपापस्यैव भस्मीभावो बोद्धव्यः । तदर्थमिदं जलं मुखाग्नौ स्वाहा सुहुतमस्तु । अथवा—एतस्मिन्नमृ-तयोनौ वेदादिप्रतिपाद्ये सूर्ये सूरिभिः प्राप्ये ज्योतिषि ज्योतिःशब्दवाच्ये विष्णुमुखाधिष्ठानदेहमुखगत आहवनीय इदं मामुदकरूपं जुहोमि तत्स्वाहा सुहु-तमस्तु । पूर्वोक्तपापस्य देहान्तप्रायश्चित्तकत्वेनोदकेनाऽऽवाह्य तद्धोमेन सर्वपापं भस्मी करोमीति भावः ।

अथ चतुर्थी—

शं नो॑ दे॒वी र॒भिष्ट॑य॒ आपो॑ भवन्तु पी॒तये॑ ।

शं यो र॒भिस्र॑वन्तु नः ॥ (ऋ० सं० अ० ७ अ० ६ व० ५)

आपो देवीर्देव्यः क्रीडादिगुणविशिष्टा अब्देवताः परमात्मा स्त्रीरूपाणि वा नोऽस्माकं सुखदात्र्यो भवन्तु । तथाऽभिष्टयेऽभीष्टप्रापणाय भवन्तु । ऐहिकसु-खाय पारत्रिकसुखाय च भवन्त्वित्यर्थः । तथा नः पीतये हरिकथामृतरसपा-नाय च भवन्तु । तथा देव्यः शमुत्पन्नानां रोगाणां शमनकर्त्र्यो भवन्तु । अनुत्प-न्नानां रोगाणां पृथक्करणं कुर्वन्तु । किंच—आपो नोऽस्माकमभि उपरितश्च स्रवन्तु प्रवहन्तु प्रवाहं कुर्वन्तु मच्छरीरोपरि प्रवाहं कुर्वन्त्वित्यर्थः ।

अथ पञ्चमी—

ईशा॑ना॒ वार्या॑णां॒ क्षयं॑न्तीश्चर्षणी॒नाम् । अ॒पो

याचा॑मि भेष॒जम् (ऋ० सं० अ० ७ अ० ६ व० ५)

अपोऽब्देवताः परमात्मरूपाणि वाऽहं भेषजमौषधं संसाररोगस्यौषधं याचामि । कथंभूता वार्याणां वरणीयानां ज्ञानभक्त्यादिसाधनानां प्रसिद्धधनानां वा क्षयन्तीरुत्पादिका वासस्थाना वा । तथा चर्षणीनां सर्वासां प्रजानामीशानाः शिक्षिकास्तथा वासयित्रीः ।

अथ षष्ठी—

अ॒प्सु मे॒ सोमो॑ अब्रवीद॒न्तर्विश्वा॑नि भेष॒जा ।

अग्निं च विश्वशंभुवम् (ऋ० सं० अ० ७ अ० ६ व० ५)

नन्वप्सु भेषजसद्भावे तद्याचनं युक्तं तदेव कुत इत्यत आह—उत्कृष्टा मा, उमया सहितः सोमः परमात्मा, उत्कृष्टा माः प्रमाणानि तैः सहितो वायुर्वा, उमया सहितः सोमो रुद्रो वा सोमश्चन्द्रो वा मे मह्यमब्रवीत् । किमिति उत्तरमाह—अप्सु जलेष्वन्तर्मध्ये विश्वानि सर्वाणि भेषजा भेषजान्यौषधानि सन्ति । अब्देवतानां संसाररोगोपशमन औषधयाचनं युक्तम् । तथा विश्वशंभुवं सर्वसुखकरमग्निं चाब्रवीत् । सर्वजगत्सुखकरोऽग्निरप्सु वर्तते तमब्रवीद्वेदपुरुषोऽप्सु विद्यमानवाय्वग्निरुद्रचन्द्रश्रीलक्ष्मीनारायणं चाब्रवीदिति भावः । (* विश्वभेषजीर्विश्वानि भेषजानि यासु ता आपोऽपि तथाऽब्रुवन्नग्निं प्रति । अतो भवतां तद्याचनं युक्तमिति भावः । )

अथ सप्तमी—

आपः पृणीत भेषजं वरूथं तन्वे३ मम ॥
ज्योक्च सूर्यं दृशे ॥ (ऋ० सं० अ० ७ अ० ६ व० ५)

हे आपो मम तन्वे शरीरार्थे भेषजं रोगनिवारकमौषधं वरूथं यथेष्टं पृणीत पूरयत । किमर्थम् । ज्योक् शीघ्रं सूर्यं परमात्मानं दृशे द्रष्टुम् । शरीरस्य नीरोगत्वेनेश्वरदर्शने साधनानुष्ठानं भवतीति तत्प्रार्थनं युक्तमिति भावः । यद्वा मत्स्थूलशरीरकलारूपमनसे भगवद्दर्शनासामर्थ्यरोगनिवारकश्रवणरूपसंपत्तिमौषधं ददत, तेन भगवन्तं ब्रह्मादिसेव्यं दृशे [ द्रक्ष्यामि ] इति ।

अथाष्टमी—

इदमापः प्रवहत यत्किंच दुरितं मयि ।
यद्वाऽहमभिदुद्रोह यद्वा शेप उतानृतम् ॥

(ऋ० सं० अ० ७ अ० ६ व० ५)

हे आपो मयीदं यत्किंचिद्दुरितमज्ञानादिलक्षणम् । यद्वाऽहमभिदुद्रोह सर्वतो बुद्धिपूर्वकं द्रोहं कृतवानस्मि । अथवा शेपे शप्तवानस्मि । अथवाऽनृतमुक्तवानिति यदस्ति तत्सर्वमपराधजं पापं प्रवहत मत्तोऽपनीयान्यत्र नय[त] प्रापय[त] । प्रवाहरूपेणान्यत्र नय[त] प्रापये(य)[ते]त्यर्थः ।

* धनुश्चिह्नान्तर्गतमन्त्रानुपयुक्तम् । अप्सु म इत्यृचो गायत्रीछन्दस्काया एव विवक्षितत्वात् ।

अथ नवमी—

आपो॑ अ॒द्यान्व॑चारिषं॒ रसे॑न॒ सम॑गस्महि ।
पय॑स्वानग्न॒ आग॑हि॒ तं मा॒ संसृ॑ज॒ वर्च॑सा ॥

( ऋ० सं० अ० ७ अ० ६ व० ५ )

हे आपोऽहमद्य सेवामन्वचारिषं सेवां कृतवानस्मि । हे आपोऽन्वचारिषं युष्माक-मनुचरणं कृतवानस्मि । वयं युष्मद्रसेन भवद्दत्तपरमानन्देन प्रसादेन प्रसिद्धरसेन वा समगस्महि संगन्तास्महे । तथा यूयं रसेन वैराग्यादिज्ञानरसेन मां संगतं कुरु[त] । हेऽग्ने पयस्वान्पयसि विद्यमानस्त्वमागह्यागच्छ मद्वृत्तिसंनिधिं कुरु । तं तादृशं मा मां स्वसेवकं मां वर्चसा ब्रह्मवर्चसा संसृज संयोजय ॥

स॒स्रुषी॒स्तद॑पसो॒ दिवा॒ नक्तं॑ च स॒स्रुषीः॑ ।
वरे॑ण्यक्रतूरहमा दे॒वीरव॑से हुवे ॥ (ऋ० सं० परि० )

हे आपो हेऽग्ने तदपसस्तन्मयि स्थितं वर्चोविशेषादिकमपसोऽन्यत्र स्थितं मा कार्ष्ट मा कुरुत । तदन्यत्र स्थितं ब्रह्मवर्चोविशेषादिकं मयि सस्रुषीः सृजत । न केवलं ब्रह्मवर्चोविशेषादिकं मयि स्थितं वाऽन्यत्र विद्यमानं वा यदा कदाचित्सस्रुषीरित्येव, किं नाम दिवा नक्तं च सस्रुषीः । दिवाऽह्नि नक्तं रात्रौ च सर्वदाऽपि मयि सस्रुषीः सृजतेत्यर्थः । कस्मात्कारणात् । हे देव्योऽबभिमानिन्यो देवता भगवद्रूपविशेषा वाऽहं वरेण्यक्रतूरा सम्यग्वर-णीयस्य परमात्मनः क्रतुराराधनक्रतुराराधनं कर्तास्मि । अवसे निश्चयस्व-रूपे परमात्मनि हुवे सर्वसमर्पणहोमं कर्तास्मीति यतस्तस्मात्कारणात्सर्वदाऽपि मयि ब्रह्मवर्चोविशेषादिकं सृजतेत्यर्थः ॥

भद्रं नो अपिवातय मनः । ( आश्व० गृह्यप० अ० १ )

हे मनो मनोभिमानिरुद्र नोऽस्माकं भद्रं मङ्गलमपिवातय संपादय । सर्व-दाऽस्माकं भगवद्विषयकसद्धर्माचरणादिलक्षणं मङ्गलं यथा स्यात्तथा कुर्विति मनोभिमानिनः प्रार्थना ।

ॐ ऋ॒तं च॑ स॒त्यं चा॒भी॑द्धा॒त्तप॒सोऽध्य॑जायत ।
ततो॒ रात्र्य॑जायत॒ ततः॑ समु॒द्रो अ॑र्ण॒वः ॥
स॒मु॒द्राद॑र्ण॒वादधि॑ संवत्स॒रो अ॑जायत । अ॒हो॒-

रात्राणि विदधद्विश्वस्य मिषतो वशी ॥
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥

(ऋ० सं० अ० ८ अ० ८ व० ४८)

भाववृतो देवताऽस्यायमर्थः—भावान्पदार्थान्वर्तयतीति । भावानां पदार्थानां वृत्तं वर्तनं यस्मादिति वा तद्भाववृत्तं ब्रह्म परमात्मेत्यर्थः ।

ऋतं चेति मन्त्रत्रयस्यायमर्थः—ऋतं पूर्वागतवत्सदा स्थितमृतमीश्वरावतारमत्स्यादिर्वा, सत्यमन्यज्जगदिद्धात्प्रकाशमानपरमात्मनस्तपसो वाऽध्यजायताभिव्यक्तं जातं च । तदुत्पत्तिप्रकारं विवृणोति—ततो विष्णो रात्री दुर्गाऽजायत लक्ष्मीस्तदाज्ञया श्रीभूतदुर्गादिभेदेनावततारेति यावत् । ऋतं मानसार्थसंकल्पनं सत्यं वाचिकं यथार्थभाषणम् । चकारादन्यदपि शास्त्रीयं ज्ञानं समुच्चीयते । यद्वा—ऋतं विकाररहितमीश्वरावताररूपं मत्स्यादिकं सत्यमबाध्यं सर्वं जगत्तपसोऽध्यालोचनानन्तरमिद्धात्प्रकाशमानात्परमात्मनः सकाशादभि सम्यगध्यजायताभिव्यक्तमभूत् । केन प्रकारेण जगदुत्पन्नमिति तत्राऽऽह—दुर्गायाः सकाशात्सम्यगुद्रेक उत्साहः समुद्रेकस्तस्मात्समुद्रेकात्समुद्र इत्युच्यते । ज्ञानभक्तिवैराग्यादिसमुद्रो भगवद्दत्तसुखवत्त्वादर्णवशब्दवाच्यो ब्रह्माऽजायत । उपलक्षणमेतत् । सर्वतत्त्वाभिमानिनो देवाश्च जाताः । समुद्रादर्णवादधि संवत्सरः सम्यग्वत्सभूताञ्शिवादीन्रमयतीति संवत्सरो ब्रह्मा विष्णुर्वा संवत्सरात्मकः कालो वाऽध्यजायत । कालः कीदृश इत्यत आह—अहोरात्राणि विदधदिति । अयनऋतुमासपक्षादिनाऽहोरात्रादि(?)रूपः । एवं मिषतो निमेषादियुक्तस्य विश्वस्य जगतो वशी स्वामी धाता विष्णुः सूर्याचन्द्रमसौ । उपलक्षणान्मनुष्यासुरादीन्दिवं च पृथिवीं चान्तरिक्षम् । अथो स्वर्महरादिलोकांश्च यथापूर्वमकल्पयत्, ये ये पदार्था यन्नामयदाकारविशिष्टास्तांस्तांस्तथैवाकल्पयदकरोत् । "ऋतं चेति पठित्वा तज्जलं वामे क्षिपेत्क्षितौ" इत्युदके पापपुरुषं ध्यात्वा तज्जलं वामभागे भूमौ निक्षिपेत्* ।

"शक्रस्यैवाऽऽज्ञया युक्तो जले तिष्ठति सर्वदा ।
तस्यैव निधनार्थाय लिखेद्व्याहृतिमन्त्रकम् ॥
मध्ये चैव तु ह्रींकारं वरुणाबीजमुल्लिखेत् ।
गरुडमुद्रां प्रदर्श्य मूलेन चाभिमन्त्रयेत्" ॥

* अत्र किंचित्त्रुटितम् ।

* तज्जलेनार्घ्यप्रदानं कुर्यादित्यर्थः ।

असावादित्यो ब्रह्म । ( आ० गृह्यप० अ० १ ) ।

असौ परिदृश्यमानमण्डलवर्त्यादित्यनामा ब्रह्मगुणपरिपूर्णो विष्णुरेव ।

गायत्र्याश्च प्रयोगेण पुनरागमनं न स्यात् ।

अतः—" उत्तिष्ठ देवि गन्तव्यं पुनरागमनाय च ।
उत्तिष्ठ देवि स्थातव्यं प्रविश्य हृदयं मम " ॥

इति पुनरावाहनं कुर्यात् ॥

प्रातर्देवीमदितिं जोहवीमि मध्यंदिन उदिता सूर्यस्य । राये मित्रावरुणा सर्वतातेळे तोकाय तनयाय शं योः ॥ ( ऋ० सं० अ० ४ अ० ४ व० ७ )

अस्यायमर्थः—अहं प्रातर्देवीमदितिं प्रातःसंध्याभिमानिनीं देवीं क्रीडादिगुणविशिष्टामदितिनाम्नीं स्त्रीरूपां तां जोहवीमि अत्यन्तमुपासां सेवां करोमि । मध्यंदिने मध्याह्ने सूर्यस्य सकाश उदिता मध्याह्न इति संज्ञां प्राप्ता या संध्या सा तोकाय शिशुरूपाय तनयाय पुत्राय । एतादृशाय मह्यं मे शं योः शं प्रापयत्वित्यर्थः । कस्मै प्रयोजनाय । मित्रावरुणयोः सकाशात्तन्नामयोः सकाशात्सर्वतातेळे सर्वज्ञानलक्षणवित्ताय वित्तप्राप्त्यर्थम् । अत्र सर्वज्ञानवित्तप्राप्तय इत्यत्र वित्तं द्विविधमान्तरं बाह्यं च । आन्तरं ज्ञानादि, बाह्यं धनादि ।

सर्वदेवता विहाय मत्प्रार्थनेन किमित्यत आह—

आगच्छ वरदे देवि जपे मे संनिधौ भव ।
गायन्तं त्रायसे यस्माद्गायत्री त्वं ततः स्मृता ॥
( आ० गृह्यप० अ० १ )

हे वरदे वरप्रदे देवि क्रीडादिगुणविशिष्टे गायत्र्यागच्छ । मे मया क्रियमाणे जपे संनिधौ भव सांनिध्यं कुरु । यस्मात्कारणाद्गायन्तं गायत्री त्वं मन्त्रजपं कुर्वन्तं त्रायसे तस्मात्कारणात्त्वं गायत्रीशब्दवाच्याऽसि ।

ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसंनिविष्टः ।

---

* अत्रापि त्रुटितं किंचित् ।

केयूरवान्मकरकुण्डलवान्किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

ध्येयः सदेति । सवितृमण्डलमध्यवर्ती श्रीसवितृनामकश्रीलक्ष्मीनारायणोऽस्माभिः सदा सर्वकालेऽपि ध्येयो ध्यातव्यः । कथंभूतो नारायणः—सरसिजासनसंनिविष्टः कमलासने सम्यगुपविष्टः । पुनः कीदृशः—केयूरवान्हस्तकटककटिसूत्रादिविभूषणवान् । पुनः कीदृशः—मकरकुण्डलवान्, मकरवद्विद्यमानकुण्डलाभरणवान् । पुनः कीदृशः—किरीटी मुकुटधारी । पुनः कीदृशः—हारी मुक्ताहारवान्वैजयन्तीहारवान्वा । पुनः कीदृशः—हिरण्मयवपुर्जाम्बूनदसुवर्णवद्वपुः शरीरकान्तिमान् । पुनः कीदृशः—धृतशङ्खचक्रः । शङ्खचक्राद्यायुधधारी । एतादृशः ।

ॐ भूर्भुवः स्वः, तत्सवितुर्वरेण्यं भर्गो देवस्य
धीमहि । धियो यो नः प्रचोदयात् ॥

यो देवः सविताऽस्माकं धियो धर्मादिगोचरः ।
प्रेरयेत्तस्य तद्भर्गस्तद्वरेण्यमुपास्महे ।

यः सविता सवितृशब्दवाच्यो देवः क्रीडादिगुणविशिष्टो धर्मादिगोचरो धर्मार्थकाममोक्षादिविषयोऽस्माकं धियः सद्बुद्धीः प्रेरयेत्, तस्य तद्व्याप्तं भर्गो ज्ञानपूर्णं वरेण्यं वरयितुं योग्यं भगवन्तमुपास्मह उपासां सेवां कुर्म इति ।

आयातु वरदा देवी अक्षरं ब्रह्मसंमितम् ।
गायत्री छन्दसां मातेदं ब्रह्म जुषस्व मे ॥

( तै० आ० प्र० १० अ० ३४ )

वरप्रदा क्रीडादिगुणविशिष्टा गायत्री मां प्रत्यायातु । हे गायत्रि त्वं छन्दसां वेदानां माता मापयति ज्ञापयतीति माता । अतस्त्वत्प्रार्थनं युक्तम् । सवितृमण्डलान्मद्धृदयं प्रति याहि । हृदि संनिधानप्रयोजनमाह—अक्षरं ब्रह्मसंमितमिति । सम्यग्ब्रह्मैव प्रतिपादकमित्यर्थः । न तु समानम् । ब्रह्मसंमितं परब्रह्मणः संमितं सदृशम् । ओमित्येकाक्षरमिदं ब्रह्म मे मम जुषस्व तदुपासनामहं यथा कुर्यां तथा जुषस्व कुरुष्व ।

एवमुपासनाकरणे फलमाह—

यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते ।

( तै० आ० प्र० १० अ० ३४ )

यदह्नादह्नि दिवा यत्पापं कुरुते तत्तस्मात्पापादह्ना दह्नि क्रियमाणात्संध्यागा-यत्रीजपानुष्ठानात्प्रतिमुच्यते निर्लिप्तो भवति ।

यद्रात्र्यात्कुरुते पापं तद्रात्र्यात्प्रतिमुच्यते ।
सर्ववर्णे महादेवि संध्याविद्ये सरस्वति ॥

(तै० आ० प्र० १० अ० ३४)

यद्रात्र्याद्रात्रौ कृतं पापं तस्मात्पापाद्रात्र्यां कृतात्संध्यागायत्रीजपानुष्ठाना-त्प्रतिमुच्यते निर्लिप्तो भवति । कीदृशी त्वम्—सर्ववर्णे इति । भगवतः स्त्रीरूप-विवक्षया सर्ववर्ण इत्यादि संबोधनम् । रक्तश्वेतकृष्णरौक्म्यादिवर्णोपेते, यद्वा सर्ववर्णप्रतिपाद्यत्वात्सर्ववर्णे सर्वशब्दवाच्य इत्यर्थः । महादेवि महद्भिर्ब्रह्मा-दिभिः स्तुत्ये । संध्याविद्ये संध्याकाले विशेषतः संनिधानवति । अथवा संध्यो-पास्तिविद्ये । सरस्वति तच्छब्दवाच्ये ।

पुनः कथंभूते—

अजरे अमरे देवि सर्वदेवि नमोऽस्तु ते ।

अजरे जरारहितेऽमरे मरणरहिते देवि क्रीडादिगुणविशिष्टे सर्वदेवि पूज्ये । नमोऽस्तु ।

पुनः कथंभूताऽसि—

ओजोऽसि तेजोऽसि सहोऽसि बलमसि
भ्राजोऽसि देवानां धाम नामासि विश्वमसि
विश्वायुः सर्वमसि सर्वायुरभिभूरोम् । (तै०आ०प्र० १०अ०३५)

ओजोऽसि अवष्टम्भकशक्त्याद्युपेताऽसि । तेजोरूपाऽसि । सहनशक्त्युपे-ताऽसि । बलरूपाऽसि । प्रकाशमानाऽसि । देवानां मन्दिरवदाश्रयभूताऽसि । नामासि सर्वप्रसिद्धाऽसि । विश्वमसि स्थूलरूपाऽसि । विश्वस्य जगत आयुर्भू-ताऽसि सर्वव्याप्ताऽसि । सर्वायुः सर्वोपासकानामायुरायुष्यमसि । अधिकत्वेन र्भवसि । उपासकानामायुष्याद्यभिवृद्धिदानेनाऽऽयुराद्यभिव्यापिनी भवसी-त्यर्थः । ओं गुणपरिपूर्णश्रीनारायणप्रतिपादनपराऽसि, इति । अथवाऽभिभूः सर्वपापपरिहारहेतुरसि । यन्नामस्मरणस्य सर्वपापनिवारकत्वं किमुत ध्यान-स्येति भावः ।

गायत्रीमावाहयामि सावित्रीमावाहयामि सर-

स्वतीमावाहयामि श्रियमावाहयामि ह्रिय-
मावाहयामि छन्दऋषीनावाहयामि । (तै॰आ॰प्र॰ १०अ॰ ३५)

अहं गायत्रीशब्दवाच्यां गायत्रीनामिकां * सरस्वतीनामिकां श्रियं सुखरूपां स्वयमेव स्वयमाश्रितेति श्रीशब्दवाच्यां ह्रियं ह्रीशब्दवाच्यामेवं छन्दऋषीन्सर्ववेदद्रष्टॄन् सूर्यमण्डल आवाहयामि विशेषतो ध्यानार्थम् । सवितृमण्डलमध्यवर्तिनः श्रीनारायणस्य देवस्य वरणीयं पूज्यं तेजो वयं ध्यायेमोपास्महे । यो नारायणोऽस्मान्संध्योपास्त्यादिसत्कर्मणि प्रेरयति तं गायत्रीमन्त्रार्थभूतं श्रीनारायणं सर्वत्र स्मरेदित्यर्थः । सवितुर्देवस्य वरेण्यं तेजो ध्यायेमहि योऽस्माकं [धियः] कर्मणि प्रेरयतीति गायत्रीमन्त्रार्थं स्मृत्वा ।

मन्त्रप्रतिपाद्यदेवतालक्षणमाह—

अग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयं रुद्रः शिखा
पृथिवी योनिः प्राणापानव्यानोदानसमाना
सप्राणा श्वेतवर्णा सांख्यायनसगोत्रा, इति ।
(तै॰ आ॰ प्र॰ १० अ॰ ३५)

अग्न्यादिदेवतास्तत्तदवयवजन्यास्तदाश्रिताश्च । अत्र विष्णुशब्देन सोमलताभिमानी सोमो विवक्षितः, विष्णोर्जनितेति श्रुतेः । पृथिवी योनिस्तज्जन्या तदाश्रिता च प्राणादयः पञ्च तच्छ्वासजन्यास्तदाश्रिताश्च । श्वेतवर्णेत्यत्र श्वेतपदं रक्तादेरुपलक्षणम् । एतादृशा । सा च सांख्यायनसगोत्रोत्पन्नेत्यर्थः ।

गायत्रीमन्त्रलक्षणमाह—

गायत्री चतुर्विंशत्यक्षरा त्रिपदा षट्कुक्षिः पञ्च-
शीर्षा, (तै॰ आ॰ प्र॰ १० अ॰ ३५) इति ।

" तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् " इयं चतुर्विंशत्यक्षरोपेता । अष्टाक्षरात्मकत्रिपदा । षट्संख्या आकारा इत्यर्थः (?) व्याकरणादिपञ्चानां शिरस्थानीयेति तदर्थः ।

ॐ जातवेदसे सुनवाम सोममरातीयतो निदं-
हाति वेदः । स नः पर्षदति दुर्गाणि विश्वा
नावेव सिन्धुं दुरिताऽत्यग्निः ।
(ऋ॰ सं॰ अ॰ १ अ॰ ७ व॰ ७)

* अत्र सावित्रीपदव्याख्यानं त्रुटितं बोध्यम् ।

वयं जातवेदसे चराचरप्रपञ्चस्य सृष्ट्यादिलाभो यस्मात्तस्मै सर्वज्ञाय परमात्मनेऽग्नये वा सोमं सुनवाम मनसा विषयं करवाम । स वेदो वेत्तीति वेदः परमात्माऽरातीयतोऽरातित्वं शत्रुत्वं कर्तुमिच्छतः पुरुषान्निदहाति भस्मीकरोति । स परमात्माऽग्निर्वा नोऽस्माकं विश्वा विश्वानि दुर्गाणि सर्वापदोऽतिपर्षदतिशयेन नाशितवान् । यथा लोके नाविको नावा सिन्धुं समुद्रं नदीं वा तारयत्येवं परमात्माऽग्निर्वा दुरिता दुरितान्यतिशयेन तारयतीत्यर्थः ॥

तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये
दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः ।
ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं
चतुष्पदे ॥

तत्परं ब्रह्म शंयोः सुखप्राप्त्यर्थमावृणीमहे सम्यक्प्रार्थयामः । कस्मै प्रयोजनाय यज्ञाय यज्ञशब्दवाच्याय परमात्मने गातुं श्रुतितन्मीमांसाशास्त्रैर्गानं कर्तुं यज्ञपतये यज्ञस्वामिने गातुं च । अनेन गानेन नोऽस्माकं दैवी देवतासंबन्धिनी स्वस्तिरस्तु कल्याणमस्त्वित्यर्थः । मानुषेभ्यो मनुष्येभ्यः स्वस्तिरस्तु । ऊर्ध्वं जिगातु भेषजम् । भेषजं संसाररोगनिवर्तकमौषधमूर्ध्वं जिगातूत्कृष्टत्वेन जयतु द्विपदेभ्यः सकाशान्नोऽस्माकं शं सुखमस्तु । चतुष्पदेभ्यः सकाशान्नः शं सुखमस्तु ।

नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै
नम ओषधीभ्यः । नमो वाचे नमो वाच-
स्पतये नमो विष्णवे महते करोमि ।

( आ० गृह्यसू० अ० ३ )

ॐ नमःप्रतिपाद्याय श्रीनारायणाय नमः । ब्रह्मणे गुणपूर्णाय नमः । अग्नये नमोऽस्तु पृथिव्यै नमः । ओषधीभ्यो नमः । वाचे वागभिमानिन्या उमायै नमः । अथवा वागभिमानिन्यै सरस्वत्यै नमः । वाचस्पतये ब्रह्मणे वायवे वा नमः । अथवा बृहस्पतये नमः । महते महात्मने विष्णवे श्रीनारायणाय नमस्करोमि ।

ॐ शान्तिः शान्तिः शान्तिः ।

शान्तिराध्यात्मिकतापस्य शान्तिरस्तु निवृत्तिरस्तु । शान्तिर्भौतिकतापस्य शान्तिरस्तु निवृत्तिरस्तु । शान्तिराधिदैविकस्यापि तापस्य शान्तिरस्तु निवृत्तिरस्तु ।

ॐ नमः प्राच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमः ।

नमः प्राचीदिक्स्वामिने विष्णवे नमः प्राच्यै दिशे नमः । प्राच्यां दिशि या इन्द्राद्या देवताः प्रतिवसन्ति स्वामित्वेनैताभ्यश्च नमो नमः ।

ॐ नमो दक्षिणायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमः ।

दक्षिणस्यां दिशि यमादयः सन्ति ।

ॐ नमः प्रतीच्यै दिशे० ।

प्रतीच्यां दिशि वरुणाद्याः सन्ति ।

ॐ नम उदीच्यै दिशे० ।

उत्तरस्यां दिशि सोमाद्याः सन्ति ।

ॐ नम ऊर्ध्वायै दिशे० ।

ऊर्ध्वायां दिशि गणेशादिभ्यः ।

ॐ नमोऽधरायै दिशे० ।

अधरस्यां दिशि शेषमित्रादिभ्यः ।

ॐ नमोऽवान्तरायै दिशे० ।

अन्तरिक्षायां दिशि गणेशपुत्रादिभ्यः । नमो नम इति पूर्ववत्सर्वत्रान्वयः ।

कामोऽकार्षीत् । मन्युरकार्षीत् । नयं प्रजां मे गोपाय । अमृतत्वाय जीवसे । जातां जनिष्यमाणां च । अमृते सत्ये प्रतिष्ठिताम् ।

कामो विषयकामो यदकार्षीत् । मन्युः क्रोधो यदकार्षीत् । नयं प्रजां नीच प्रजां ताभ्यः सकाशान्मे गोपाय रक्षय । अहममृतत्वाय मोक्षाय जीवसे जीवामि जातां जनिष्यमाणां च प्रजाममृते मोक्षे सत्ये प्रतिष्ठितां प्रतिष्ठामि (?) ।

यां सदा सर्वभूतानि स्थावराणि चराणि च ।
सायं प्रातर्नमस्यन्ति सा मा संध्याऽभिरक्षत्वों नमः ।

यां सदा स्थावराणि-जडानि सर्वभूतानि चराणि चेतनानि च सायं प्रातर्नमस्यन्ति सा संध्या मा मामभिरक्षतु पालयतु ।

उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि ।
ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम् ॥

( आश्व० गृह्यप० अ० १ )

हे देव्युत्तमे शिखरे देशे जाते भूम्यां भूमौ मानसोत्तरपर्वतमूर्धनि जाते स्थिते त्वं ब्राह्मणेभ्यो नमस्कृतेभ्यस्तैरनुज्ञाता (?) सती यथासुखं गच्छेति प्रार्थना । अथवा मेरुपर्वतमूर्धनि जातमुत्तमशिखराद्युपेतं ब्रह्मभवनं गच्छेति वा ।

स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने
द्विजाता । आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं
मह्यं दत्त्वा प्रजातं ब्रह्मलोकम् ॥

( तै० आ० प्र० १० अ० ३६ )

हे वेदमातः पवने ब्रह्मणि द्विजाता द्विरावृत्त्या जाता प्रचोदयन्ती सर्वान्सत्कर्मादिषु प्रेरयन्ती । अथवा पवनेन सह मां चोदयन्ती प्रेरयन्ती वरदा वरप्रदात्री स्तुतो मया स्तुता सती पृथिव्यां स्थितस्य ममाऽऽयुरायुष्यं द्रविणमन्तर्बहिश्चेत्युभयविधं विद्याधनात्मकं द्रविणं ब्रह्मवर्चसं प्रजातं प्रजावृद्धिं प्रकृष्टतयाऽभिव्यक्तं वैकुण्ठं वा ब्रह्मलोकं वा मह्यं दत्त्वा सुखं प्रयच्छ ।

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पति-
रेक आसीत् । स दाधार पृथिवीं द्यामुतेमां
कस्मै देवाय हविषा विधेम ॥ ( ऋ० सं० अ० ८ अ० ७ व० ३ )

अग्रे प्रलयकाले हिरण्यगर्भो ब्रह्मा समवर्तताऽऽसीत् । कथंभूतो भूतस्य जातः, जातस्य भूतस्योत्पन्नप्राणिमात्रस्यैकपतिर्जगन्मुख्यस्वाम्यासीत् । स ब्रह्मा पृथिवीं पृथिवीलोकम्, उतानन्तरं द्यां द्युलोकम् । इदमुपलक्षणं सर्वमपि लोकं दाधार दध्रे धृतवानित्यर्थः । कस्मै कशब्दवाच्याय ब्रह्मणे वयं हविर्द्रव्येण मेध्यपूजासाधनद्रव्येण पूजां विधेम कुर्म इत्यर्थः ॥

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्याः सप्त धामभिः ॥ इदं विष्णुर्विचक्रमे
त्रेधा निदधे पदम् । समूढमस्य पांसुरे ॥

( ऋ० सं०अ० १ अ० २ व० ७ )

यतो यान्देवानुदिश्य विष्णुस्त्रिविक्रमरूपी श्रीनारायणो विचक्रमे सर्व-ब्रह्माण्डमाक्रान्तवान्, अतः कारणाद्देवा नोऽस्मानवन्तु रक्षन्तु। भगवत्प्रसादपात्रीभूता अनन्तकालेऽपि श्रीहरिरक्षिताः श्रीहरिशरणाः सर्वे देवा अस्मान्रक्षन्त्विति यावत्। तादृशोऽनादिकालेऽपि स्वभक्तरक्षणशीलः श्रीविष्णुर्वामनरूपीदं परिदृश्यमानं सर्वं जगत्त्रेधा पादत्रयेण विचक्रम आक्रमितवान्। तृतीयपादस्यावकाशाभावदशायां बलिराज्ञो मूर्ध्नि पदं निदधे। समूलं मूलसाहित्यं यथा भवति तथाऽस्य बलिराज्ञः पांसुरे क्षार्ति चकार गर्वखण्डनं चकारेत्यर्थः।

स्योना पृथिवि भवा नृक्षरा निवेशनी।
यच्छा नः शर्म सप्रथः॥ (ऋ० सं० अ० १ अ० २ व० ६)

हे पृथिवि स्योना सर्वधारिणी नृणां क्षराऽभीष्टक्षरा दोग्ध्री निवेशनी स्वाश्रयभूता भव सप्रथः सस्वामिका त्वं नोऽस्माकं शर्म सुखं यच्छ देहीति भूप्रार्थना।

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमा-
क्षभिर्यजत्राः॥ स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्य-
शेम देवहितं यदायुः॥

(ऋ० सं० अ० १ अ० ६ अ० १६)

हे देवा यजत्रा यजनशीला वयं कर्णेभिः कर्णाभ्यां भद्रं मङ्गलं शृणुयाम शृणुमः। सर्वदा वः प्रसादेन श्रीहरिकथाश्रवणलक्षणं मङ्गलं शृणुम इत्यर्थः अक्षभिर्नेत्राभ्यां भद्रं पश्येम। मङ्गलानां च मङ्गलमित्यादिना मङ्गलरूपं भगवद्रूपं विशेषं चलाचलप्रतिमालक्षणं भद्रं मङ्गलं पश्यामः। स्थिरैरङ्गैर्दृढीभूतैः सर्वावयवैस्तनूभिः शरीरैर्वयं देवहितं देवस्य श्रीनारायणस्य हितं प्रीतिर्यथा स्यात्तथा तुष्टुवांसः स्तोत्रं कुर्वन्तः सन्तो यदायुर्यदस्माकमायुर्वर्तते तत्सफलं कुर्म इत्यर्थः।

कृतो नमस्कारो दिग्देवतानामेव न किंतु विष्णोरेवेत्यभिप्रेत्याऽऽह—

आकाशात्पतितं तोयं यथागच्छति सागरम्।
सर्वदेवनमस्कारः केशवं प्रति गच्छति॥

आकाशात्सकाशात्पतितं तोयं यथा समुद्रं गच्छति तथा सर्वदेवताकृतनमस्कारोऽपि केशवं प्रति गच्छतीत्यर्थः।

वासनाद्वासुदेवोऽसि वासितं ते जगत्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥

वैकुण्ठादौ वासनात्स्थितेः सर्वत्र नियामकतया स्थितेर्वा वसुः । ते त्वयि जगत्रयं वासितम् । यतः सर्वभूतनिवासोऽसि अतो वसुः । देवः क्रीडादिगुणविशिष्टः । वसुश्चासौ देवश्च वसुदेव इत्यभिधा यस्य हे वासुदेव नमोऽस्तु ते । यतो ब्राह्मणानां कारुण्यं मुख्यधर्मोऽतश्चतुःसागरपर्यन्तं गोब्राह्मणेभ्यः शुभं भवतु इत्युक्त्वा स्वगोत्रोच्चारणपूर्वकस्वगुप्तनामोक्त्या शु(शि)शुमारनामकं स्वदेहान्तर्गतं हरिं वा स्वपादौ भूमिं वा स्पृष्ट्वा प्रणम्य यस्य स्मृत्या चेत्यादिनोदकं गृहीत्वा हरये समर्पयेत् ॥

इति प्रातःसंध्यार्थः समाप्तः ।

---

अथ मध्याह्नसंध्यार्थो लिख्यते ।

विशेषस्तु—

आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु
माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु
माम् । यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम ।
सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं स्वाहा ॥

(आ० गृह्यप० अ० १)

आपोऽबभिमानिनो देवा नारायणमूर्तयो वा* । पृथुत्वात्पृथिवी विष्णुरित्यादेः पृथिवीशब्दवाच्यः स्त्रीरूपो विष्णुः स्वत एव पूतः स च मां पुनातु । शक्रान्ता देवता मता इत्यादेर्विष्णुमारभ्येन्द्रान्ताः सर्वे देवा ब्रह्मणस्पतयो वेदप्रतिपाद्यास्तेऽपि मां पुनन्तु । ब्रह्म तत्स्त्रीजातमपि वेदवेद्यम् । अत एव पूता पूतं तदपि मां पुनातु पवित्रयतु । अथवा—कथंभूता पृथिवी—पूता शुद्धा शरीरं पूतं सन्मां लिङ्गशरीररूपं जीवात्मानं पुनात्विति । ब्रह्मणस्पतिश्चतुर्मुखस्य देवस्य पतिः स्वामी श्रीहरिरिमा आपश्च पुनन्तु पवित्रयन्तु । ब्रह्मणो वेदस्य पतिः परमात्मा पुनन्तु पानान्मां पुनातु । यत्स्वतोऽभोज्यं नीचोच्छिष्टं च यद्वा दुश्चरितं निषिद्धाचरणं तथाऽसतां शूद्रादीनां सकाशात्प्रतिग्रहं तन्निमित्तकं पापं

---

* एतदनन्तरं किंचित्त्रुटितम् ।

तत्सर्वं परिहृत्य मामापः पुनन्त्वित्यर्थः । तदर्थमिदमभिमन्त्रितमुदकमास्याहवनीये स्वाहा सुहुतमस्तु ॥

---

अथ सायंसंध्यायां विशेषः ।

अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम् । यदह्ना पापमकार्षम् । मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना । अहस्तदवलुम्पतु । यत्किंच दुरितं मयि । इदमहं माममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा । (आ० गृह्यप० अ० १)

अग्निर्भगवान्प्रसिद्धाग्निर्वा । अह्नाऽह्नि । अहस्तदभिमानी वायुः । सत्ये साधुगुणविशिष्टे, इति तत्पदार्थविशिष्टो(शेषो) बोध्यः ॥

इति सायंसंध्यायां विशेषः ।

समाप्तमिदं संध्यापद्धतिभाष्यम्।

---

ॐ तत्सद्ब्रह्मणे नमः ।

# संध्याभाष्यम् ।

( संध्यामन्त्रवृत्तिः )

## *श्रीमध्वाचार्यविरचितम् ।

लक्ष्मीलक्ष्मीशपादाभ्यामियमस्तु नमस्कृतिः ।
यया निखिलभाग्यानि भवेयुर्भजतां हरिम् ॥ १ ॥
नरसिंहं हयग्रीवं नत्वा सर्वार्थसिद्धये ।
मध्वादीन्स्वगुरून्संध्यां विवृणोमि यथामति ॥ २ ॥
श्रुतिस्मृत्युदितं कृत्यं यदाराधनसाधनम् ।
तद्विधाय स मन्त्राणां वृत्तिं वक्ष्ये यथाक्रमम् ॥ ३ ॥
यावन्तोऽस्यां विकर्मस्थाः पृथिव्यां बालिशा द्विजाः ।
तेषां पावित्र्यसिद्ध्यर्थं संध्या सृष्टा स्वयंभुवा ॥ ४ ॥

व्यासः—" उपास्तिः संध्या सूर्यस्य निशायां दिवसेषु च ।
तामेव ताभ्यां तस्मात्तु प्रवदन्ति महर्षयः " ॥ ५ ॥

सूर्यान्तर्गतभगवद्ध्यानमेव संध्येत्युक्तं भवति ।

संध्याधिकारकालः—

" मौञ्जीबन्धनमारभ्य सायं प्रातश्च कालयोः ।
मध्याह्नेऽपि च कर्तव्यं यावत्प्राणविमोचनम् " ॥

दैनंदिनसंध्याकालः—

" प्रातःसंध्यां सनक्षत्रामुपासीत यथाविधि ॥
सावित्र्याः पश्चिमां संध्यामनस्तमितभास्करे ।
अध्यर्धयामादासायं संध्या माध्याह्निकीष्यते ॥
उत्तमा तारकोपेता मध्यमा लुप्ततारका ।
अधमा सूर्यसहिता प्रातःसंध्या त्रिधेष्यते ॥
उत्तमा सूर्यसहिता मध्यमाऽस्तमिते रवौ ।
अधमा तारकोपेता सायंसंध्या त्रिधेष्यते " ॥

---

* अयं मध्वाचार्यः कश्चन मध्वाचार्यपदाधिष्ठितः स्यादिति नतिश्लोकादनुमीयते ।

अकरणे प्रत्यवायमाहात्रिः—

“ यः संध्यां कालतः प्राप्तामालस्यादतिवर्तते ।
सूर्यहत्यामवाप्नोति घूलूकत्वमियात्स च ” ॥

वसिष्ठः—“ धृतोर्ध्वपुण्ड्रदेहस्तु संध्योपासनमाचरेत् ।
उपासीत द्विजः संध्यां प्राङ्मुखोदङ्मुखोऽपि वा ” ॥

विष्णुपुराणे—“ होमे त्रिकालसंध्यासु क्रियासु पठने तथा ।
नैकवस्त्रः प्रवर्तेत द्विजो वाऽऽचमने जपे ” ॥

शातातपः—“ संदध्यांसात्परिभ्रष्टं नाभिदेशे व्यवस्थितम् ।
एकवस्त्रेण तद्विद्याद्दैवे पित्र्ये च कर्मणि ” ॥

संवर्तः—“ अथाऽऽचम्य कुशैर्युक्त आसने समुपस्थितः ।
करसंपुटकं कृत्वा संध्यां नित्यं समाचरेत् ” ॥

स्मृतिरत्ने—“ दाने परिग्रहे होमे जपे संध्यात्रये तथा ।
बलिकर्मणि चाऽऽचामेदादौ द्विः सकृदन्ततः ॥

याज्ञवल्क्यः—“ भोजने हवने दाने उपहारे परिग्रहे ।
संध्यात्रये च दाने च पूर्वं पश्चाद्द्विराचमेत् ” ॥

हारीतः—“ आर्द्रवासा जले कुर्यात्तर्पणाचमने जपम् ।
शुष्कवस्त्रः स्थले कुर्यात्तर्पणाचमने जपम् ॥
जानुमात्रे जले तिष्ठन्नासीनः प्राङ्मुखः स्थले ।
पवित्रं धारयन्विप्रः शुद्धाचमनमाचरेत् ॥
वेदकर्मणि न त्याज्यं पवित्रं त्वन्यथा त्यजेत् ” ।

भारद्वाजः—“ सग्रन्थिकुशहस्तस्तु कर्माङ्गाचमनं चरेत् ।
नोच्छिष्टं तत्पवित्रं स्याद्भुक्तोच्छिष्टं तु वर्जयेत् ” ॥

शङ्खः—“ सुवर्णस्य सुवर्णस्य सुवर्णस्याङ्गुलीयकम् ।
पवित्रमिति विज्ञेयं सर्वकर्मसु पूजितम् ” ॥

माषः पञ्चगुञ्जात्मकः । षोडशमाषपरिमितं सुवर्णं सुवर्णशब्देनोच्यते ॥

याज्ञवल्क्यः—“ अन्तर्जानुः शुचौ देशे उपविष्ट उदङ्मुखः ।
प्राग्वा तु ब्रह्मतीर्थेन द्विजो नित्यमुपस्पृशेत् ” ॥

भारद्वाजः—“ सुदेशे उपविश्यैव प्राङ्मुखो ब्रह्मसूत्रवान् ।
बद्ध्वा शिखां कुशकरो द्विजो जलमुपस्पृशेत् ॥

सुमन्तुः—“ दक्षिणस्य तु हस्तस्य तलं गोकर्णतुल्यकम् ।
कृत्वा तु ब्रह्मतीर्थेन तत्तोयं शुद्धमापिबेत् ”॥

व्यासः—" गोकर्णाकृतिहस्तेन माषमात्रं जलं पिबेत् ।
तन्न्यूनमधिकं पीत्वा सुरापानी भवेद्द्विजः " ॥

ब्रह्मतीर्थादिलक्षणमाह भारद्वाजः—

" अङ्गुष्ठमूलं ब्राह्मं स्यात्प्राजापत्यं कनिष्ठकम् ।
पैतृकं तर्जनीमूलं कराग्रं दैवतं स्मृतम् ॥
आग्नेयं करमध्यं स्यात्तीर्थान्येवं द्विजस्य हि ।
दक्षिणे तु करे सन्ति ज्ञात्वा कर्म समाचरेत् ॥
पिबेदाचमनवारि वीक्षितं ब्रह्मतीर्थतः ।
प्राजापत्येन होतव्यं पैत्रेण पितृतर्पणम् ॥
कराग्रेण प्रदानं स्यान्मध्यमेन परिग्रहः " ।

यमः—" प्रत्यङ्मुखश्चेदाचामेत्पुनः स्नानेन शुध्यति ।
द्विजन्मनां विशुद्ध्यर्थं स्मार्ताचमनमुच्यते ॥
संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ।
मुक्ताङ्गुष्ठकनिष्ठाभ्यां त्रिः पिबेद्ब्रह्मतीर्थतः ॥
तथा प्रक्षाल्य हस्तौ च संकुच्यौष्ठौ द्विर्मार्ज्य वा ।
संहताङ्गुलिमूलेन प्रमृजेच्च ततो हनुम् ॥
प्रक्षाल्य हस्तौ चाऽऽस्यं च पादौ शीर्षं तथैकतः ।
मध्यमाङ्गुलिपृष्ठैश्च संस्पृशेद्घ्राणमूलतः ॥
हस्तौ प्रक्षाल्य संस्पृश्य घ्राणादि द्वादशं(?) पृथक् ।
अङ्गुष्ठेन प्रदेशिन्या घ्राणौ(णे) पश्चादुपस्पृशेत् ॥
कनिष्ठाङ्गुष्ठयोर्नाभिं तलेन हृदयं स्पृशेत् ।
अङ्गुष्ठानामिकाभ्यां च चक्षुः श्रोत्रं च संस्पृशेत् ॥
अङ्गुलीभिः शिरः सर्वैर्बाहुमूले च संस्पृशेत् ।
प्रणवेनोदकं धृत्वा आत्मानं परिषेचयेत् ॥
अनेन विधिना विप्रः कुर्यादाचमनं सदा " इति ।

प्रयोगसारे तु विशेषः—

" केशवादित्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ ।
द्वाभ्यामोष्ठौ च निमृज्य द्वाभ्यां संमार्जयेद्धनुम् ॥
एकेन पाणिं संप्रोक्ष्य पादावपि तथैकतः ।
संप्रोक्ष्यैकेन मूर्धानं ततः संकर्षणादिभिः ॥
ऊर्ध्वोष्ठनासाक्षिकर्णनाभ्युरःशिरसां भुजौ ।

श्रीपूर्वकं तु नामाऽऽदौ नमोन्तश्च ततः क्रमात् ॥
पुराणाचमनं ह्येतत्स्वयं नारायणोऽब्रवीत्" ।

वसिष्ठः—"नामभिः केशवाद्यैश्च तथा संकर्षणादिभिः ।
चतुर्विंशतिसंख्यानि स्थानानि समुपस्पृशेत् ॥
एवमाचमनं कुर्याद्द्विवारं सर्वकर्मसु" इति ।

"त्रिः प्राश्याङ्गुष्ठमूलेन द्विरुन्मृज्य कपोलकौ ।
मध्यमाङ्गुलिभिः पश्चाद्द्विरोष्ठं संमृजेत्ततः ॥
नासिकोष्ठान्तरं पश्चात्सर्वाङ्गुलिभिरेव च ।
पादौ हस्तौ शिरश्चैव जलैः संमार्जयेत्ततः ॥
अङ्गुष्ठतर्जनीभ्यां तु संस्पृशेन्नासिकापुटे ।
अङ्गुष्ठानामिकाभ्यां च कनिष्ठाङ्गुष्ठयोगतः ॥
नाभिं स्पृशेदाचमनं द्वाभ्यां तु हृदयं स्पृशेत् ।
द्वाभ्यां तु मस्तकं स्पृष्ट्वा द्वाभ्यामंसद्वयं स्पृशेत्"

[इति]स्मृत्युक्तप्रकारेणाऽऽचमनप्रकारो बोद्धव्यः । तत्क्रमः—प्रक्षालितपाणिपादः सन्धृतोर्ध्वपुण्ड्रः सोत्तरीयो बद्धशिखो यज्ञोपवीत्यासने प्राङ्मुख आसीनो मुक्ताङ्गुष्ठकनिष्ठेन पवित्रसहितदक्षिणहस्तसहितेन गोकर्णाकृतिना माषमात्रानूनातिरिक्तममलमुदकं गृहीत्वा वीक्ष्यैवाऽऽचामेत्ततः(त्र) "ॐ श्रीकेशवाय स्वाहा । नारायणाय स्वाहा । माधवाय स्वाहा" इति गोकर्णाकृतिहस्तेन त्रिरुदकं प्राश्य, ततो गोविन्दाय नमः, विष्णवे नम इति द्वाभ्यां हस्तौ संमृजेत् । मधुसूदनाय नमः, त्रिविक्रमाय नम इति मुक्ताङ्गुलिभिर्नासिकाधरोष्ठाधःप्रदेशौ संमृजेत् । वामनाय नमः , श्रीधराय नम इति द्वाभ्यां हनुदेशौ संमृजेत् । हृषीकेशाय नम इति हस्तद्वयं संमृज्यात् । पद्मनाभाय नम इति पादौ । दामोदराय नम इति शिरः । संकर्षणाय नम इति नासिकाधः । वासुदेवाय नमः प्रद्युम्नाय नम इति तर्जन्यङ्गुष्ठयोगेन नासिकापुटौ । अनिरुद्धाय नमः पुरुषोत्तमाय नम इति मध्यमाङ्गुष्ठयोगेन नेत्रे । अधोक्षजाय नमो नारसिंहाय नम इत्यङ्गुष्ठानामिकायोगेन श्रवणे । अच्युताय नम इति अङ्गुष्ठकनिष्ठायोगेन नाभिम् । जनार्दनाय नम इति पाणितलेन हृदयम् । उपेन्द्राय नम इति मुकुलिताङ्गुलिहस्तेन शिरः । हरये नम इति दक्षिणबाहुमूलम् । ॐ श्रीकृष्णाय नम इति वामबाहुमूलं स्पृशेत् ।

तत्र नाम्नामयमर्थः—कश्च, ईशश्च केशौ ताववतीति । कश्चासावीशश्चासौ वश्चेति वा । शस्ताः केशा अस्य सन्तीति वा ।

तदुक्तम्—“ हिरण्यगर्भः कः प्रोक्त ईशः शंकर एव च ।
सृष्ट्यादिनाऽवतीर्यन्ति नौ यतः केशवो भवान् ” ॥

इति हरिवंशे । केशौ विरिञ्चिपार्वतीशाववतीति केशवः । अव रक्षण-
ातीति धातोः । कं ब्रह्माणम्, ईं लक्ष्मीम्, इं कामं शं रुद्रं वर्तयति
ा । केशं सुखश्रेष्ठं वहतीति वा । केशनामका अवतारा यस्येति केशवः ।
भरा दोषास्तद्विरुद्धा नारास्तेषामयनमिति वा । दोषरहिता नारा वेदा-
स्तत्प्रतिपाद्यतया तेषामयनमिति वा । नराणामिदं नारं ज्ञानं तद्विष-
यतया तथा तदयनाद्वा । नरसंबन्धि नारं जलं तदयनाद्वा नारायणः ।
ााया लक्ष्म्या धवो माधवः । गा विन्दतीति गोविन्दः । गोभिर्वेदैः
ातिपाद्यत इति वा । वसतीति विष्णुः । णकारो बलं षकारः प्राण
आत्मेति श्रुतेर्विशिष्टबलचेष्टास्वभाव इति वा । मधुं सूदयतीति मधुसूदनः ।
त्रिविधः क्रमः पादविक्षेपो यस्येति त्रिविक्रमः । त्रिषु जीवेषु त्रिषु लोकेषु वा
वेक्रमः पराक्रमो यस्येति वा । वामं नयतीति वामनः । वाममस्यास्तीति वा ।
ामैर्मङ्गलरूपैर्नीयत इति वा वामनः । श्रियं धरतीति श्रीधरः । हृषीकाणामि-
न्द्रियाणामीशो हृषीकेशः । पद्मं नाभौ यस्येति पद्मनाभः । दामोदरे यस्येत्यसौ
दामोदरः । सम्यक्कर्षयतीति संकर्षणः । वसतीति वासुः । वसन्ति भूतान्यस्मि-
न्निति वा । दीव्यतीति देवः । वासुश्चासौ देवश्चेति वासुदेवः । वाति सूते
दीव्यतीति वा । वश्चासावसुश्चासौ देवश्चेति वासुदेवः । बलरूपोऽसुमदः शताव-
कश्चेत्यर्थः । प्रकृष्टो द्युम्नः प्रकाशो यस्येति प्रकर्षेण द्योतत इति वा प्रद्युम्नः ।
ानिभिः प्राणिभी रुध्यत इत्यनिरुद्धः । न निरुद्धोऽनिरुद्धः । पुरुषाभ्यामुत्तमः
राक्षरपुरुषाभ्यामुत्तमः । पुरुषश्चासावुत्तमश्चेति वा । श्वेतद्वीपानन्तासनवै-
ुण्ठाः सर्वेषां हृदयं सत्यलोकोऽव्याकृताकाशश्चेत्येतानि षट्पुराणि यस्यासौ
ुरुषः । अधः कृतान्यक्षजानि येनासावधोक्षजः । नरश्चासौ सिंहश्चेति वा । न
ीयत इति नरः । हिनस्तीति सिंहः । नरश्चासौ सिंहश्चेति नरसिंहः । चतुर्वि-
ानाशरहित इत्यर्थः । *। जनानर्दयतीति जनार्दनः । जनानां (?) प्राप्नोतीति
ा । आर्दयतीति वा जनार्दनः । उपोऽधिके चेति सूत्रादुप व्यधिकः सन्निन्द्रः
रमैश्वर्यवान्यः स उपेन्द्रः । सर्वं संहरतीति वा भक्तानां पापं हरतीति वा
रति सर्वं वशी करोतीति वा हरिः । कर्षणाद्वा ज्ञानानन्दस्वरूपत्वाद्वा कृष्णः ।

कृष्णशब्दनिर्वचने प्रमाणम्—
“ यतः कर्षसि देवेश नियमात्सकलं जगत् ।
अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः ॥

* अत्राच्युतनामव्याख्यानं त्रुटितं बोध्यम् ।

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते " ॥

एवं द्विराचमनं केशवादिनामभिः कृत्वा श्रुत्याचमनं द्विवारं कुर्यात् ॥

" देव्याः पादैस्त्रिभिः पीत्वा अब्लिङ्गैर्नवभिः स्पृशेत् ।
सप्तव्याहृतिगायत्र्याः शिरो व्याहृतिसंपुटम् " ॥

ॐ तत्सवितुर्वरेण्यं स्वाहा । ॐ भर्गो देवस्य धीमहि स्वाहा । ॐ धियो यो नः प्रचोदयात्स्वाहा । ॐ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातनेति हस्तौ संमृज्य । ॐ महे रणाय चक्षसे । ॐ यो वः शिवतमो रसः, हनू । ॐ तस्य भाजयतेह नः । ॐ उशतीरिव मातरः । ओष्ठौ । ॐ तस्मा अरं गमाम वः, करतलं संबध्य । ॐ यस्य क्षयाय जिन्वथ, पादौ स्पृशेत् । ॐ आपो जनयथा च नः, हस्ततलेन शिरः स्पृष्ट्वा । ॐ भूः, नासिकाग्रः । ॐ भुवः, ॐ स्वः, अङ्गुष्ठयोगेन नासिकापुटौ । ॐ महः, ॐ जनः, अङ्गुष्ठानामिकाभ्यां नेत्रे । ॐ तपः, ॐ सत्यं, मध्यमाङ्गुष्ठयोगेन श्रवणे । ॐ तत्सवितुर्वरेण्यम्, अङ्गुष्ठतर्जनीयोगेन नाभिम् । ॐ भर्गो देवस्य धीमहि, करतलेन हृदयम् । ॐ धियो यो नः प्रचोदयात् । मुकुलिताङ्गुलिभिः शिरः । ॐ आपो ज्योती रसोऽमृतं, दक्षिणबाहुमूलकम् । ॐ ब्रह्म भूर्भुवः स्वरोम्, वामबाहुमूलं स्पृशेत् । इति श्रुत्याचमनं लिखितम् ।

प्राणायामप्रकारो लिख्यते—प्राणायाममन्त्रस्य नारायण ऋषिः । परमात्मा सवितृनामकनारायणो देवता । गायत्री छन्दः । प्राणायामे विनियोगः ।

प्राणायामलक्षणम्—

" गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥
भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च ।
प्रत्योंकारसमायुक्तं तथा तत्सवितुः पदम् ॥
ओमापो ज्योतिरित्येतच्छिरः पश्चात्प्रयोजयेत् ।
त्रिरावर्तनयोगात्तु प्राणायामस्तु शब्द्यते " ॥

स च प्राणायामो रेचकपूरककुम्भकभेदेन त्रिविधः ।
रेचकादिलक्षणमाह बृहस्पतिः—

" रेचको विसृजेद्वायुः(युं) पूरकस्तन्निरोधकः ।
समेन संस्थितो यस्तु कुम्भकः समुदीर्यते ॥

ऊर्ध्वं नासिकया स्पृ(कृ)ष्टः श्वासः पूरक उच्यते ।
कुम्भको निश्चलश्वासो रेच्यमानस्तु रेचकः " इति ॥

अत्र कुम्भके विष्णुर्देवता । इतरयोर्ब्रह्मरुद्रौ देवते । अत्र प्राणरेचनं श्वासस्याधो विसर्जनम् । पूरकः श्वासस्योर्ध्वं नयनम् । कुम्भकः श्वासनिरोधकः । प्रणवगतासु सप्तसु व्याहृतिषु प्रत्येकमोंकारः प्रयोज्य ॐप्रतिपाद्य एव भूरादिप्रतिपाद्यः, न प्रसिद्धभूरादिलोका इति ज्ञापयितुम् ।

प्रणवमन्त्रस्यायमर्थः—अवति प्रविशति गुणानिति वा । अव्यते विश्यते गुणैरिति वा । भूः, अनन्तगुणपरिपूर्ण इत्यर्थः । भुवः, भूर्भूतिस्तस्या वर इति वा, भूः पूर्णः, वो वरः, निरवधिकश्रेष्ठ इति वाऽर्थः । शोभनसुखवत्त्वात्स्वः । मह पूजायामिति धातोर्महनीयत्वात्पूज्यत्वान्महः । जनकत्वाज्जनः । आलोचनकर्तृत्वात्तपः । " सच्छब्द उत्तमं ब्रूयादानन्दं तिति वै वदेत् । येति ज्ञानं समुदिष्टम् " इत्युक्तत्वादुत्तमज्ञानानन्दरूपत्वाद्वा मुक्तिनियामकत्वाद्वा सत्यशब्दवाच्यः । एवंभूतः " यः " सविता देवो " नः " बुद्धीः कर्माणि वा " प्रचोदयात् " प्रेरयेत्स्वविषयाणि कुर्यात्, तस्य " देवस्य " क्रीडादिगुणविशिष्टस्य " सवितुः " सृष्ट्याद्यष्टकर्तुर्नारायणस्य " तत् " गुणैस्ततं व्याप्तं " वरेण्यं " भजनीयं " भर्गः " भारतिज्ञानरूपं वा भरणगमनकर्तृ वा सकलपापभर्जकं वा । एवंविधं रूपं " धीमहि " चिन्तयामः । " आपः " आपालनात् । " ज्योतिः " प्रकाशनात्, प्रकाशरूपः । " रसः " सारः, अनन्तरूप इति वा । " अमृतं " मरणरहितम् । " ब्रह्म " पूर्णम् । "भूर्भुवः स्वरोम् " इत्युक्तार्थमनन्तरूपमिति वा । प्राणानायम्य पूर्वोक्ताद्युक्त्वा प्रातःसंध्यां करिष्य इति संकल्प्य मार्जनं कुर्यात् । आपो हि ष्ठेति तृचस्य सूक्तस्याऽऽम्बरीषः सिन्धुद्वीप ऋषिः । आपो देवता । गायत्री छन्दः । मार्जने विनियोगः । मार्जनं चाष्टभिः पादैः शिरस्येकमथ क्षिपेत् ।

तदुक्तम्—"आपो हि ष्ठा मयोभुवो मार्जनं चैव विप्रुषैः ।
अष्टौ मूर्ध्नि मध्ये यस्य क्षयाय जिन्वथेति च" ॥

तृचस्यायमर्थः—आपो हि ष्ठेति ( ऋ० सं० अ० ७ अ० ६ व० ५ ) । हिरवभो " आपः " अब्देवता नारायणमूर्तयः । निमित्तं तु पूर्वमुक्तम् । हिरवधारणे वा । यूयं " नः " अस्माकं " मयोभुवः " मयः सुखं भावयन्तीति मयोभुवः सुखकर्त्र्यः " ष्ठा " बभूविथ । " ताः " यूयं " नः " अस्मान् " ऊर्जे " अन्नाय बलाय वोपनीयत्वादूर्जशब्दवाच्याय परमात्मने तत्पादे

" दधातन" स्थापयत । कस्मै प्रयोजनाय—"महे रणाय" महते रमणीयाय " चक्षसे " दर्शनाय, रमणीयाय मोक्षायेति वाऽर्थः । मोक्षसाधनरूपमन्त्रादिकं कुरुतेत्यर्थः ।

यो वः शिवतमो रस इति ( ऋ० सं० अ० ७ अ० ६ व० ५ ) । भो आपः " यो वो रसः शिवतमः " अतिशयेन कल्याणः । परमात्मपक्षे तु रसशब्देनाऽऽनन्दरूपं ग्राह्यम् । " तस्य " तं रसम् " इह " अस्मिँल्लोकेऽस्मान " भाजयत " भोजयत । काः कान्कमिव । "उशतीः" कामयमाना नवप्रसूता " मातरः " पुत्रान्स्तन्यादिरसमादरेण भोजयन्ति तथा नो दिव्यरसभोजिनः कुरुतेत्यर्थः ।

अथ तृतीया—तस्मा इति ( ऋ० सं० अ० ७ अ० ६ व० ५ ) । हे "आपः" " तस्मै " तं पूर्वप्रसिद्धरसं परमानन्दरूपम् " अरं गमाम " अरमत्यर्थं गच्छाम । तं कं " यस्य क्षयाय " निवासाय, क्षि निवासगत्योरिति धातोः । "जिन्वथ" प्रीणयथ यस्य पापस्य क्षयाय विनाशाय जिन्वथ प्रीणयथ तस्मै पापक्षयाय तं रसं गमामेत्यर्थः । हे आपस्तस्मिन्नित्रासे जनयथोत्पादयथ तादृशनिवासभागिनः कुरुतेत्यर्थः ।

एवं मार्जनं कृत्वा प्रातः सूर्यश्चेत्यपः पिबेत् ।

तदुक्तम्—" अग्निश्चेति च सायाह्ने प्रातः सूर्येत्यपः पिबेत् ।
आपः पुनन्तु मध्याह्ने ततश्चाऽऽचमनं चरेत् " इति ॥

सूर्यश्च ( आ० गृह्यप० अ० १ ) इत्यस्य मन्त्रस्य नारायण ऋषिः । सूर्यो देवता । अनुष्टुप्छन्दः । जलाभिमन्त्रणे विनियोगः । सूर्यश्चेत्यस्यायमर्थः—सूरिभिः प्राप्यत्वात् "सूर्यः" परमात्मा सूर्यो देवो वा । यः "च" "मन्युः" मनु अवबोधन इति धातोर्मन्युर्नृसिंहः क्रोधाभिमानी रुद्रो वा । एवं "मन्युपतयः" क्रोधाभिमानिनस्तन्नियामका ब्रह्माद्यास्ते सर्वे देवा " मन्युकृतेभ्यः " मन्युरित्युपलक्षणं, क्रोधादिना कृतेभ्यः "पापेभ्यो रक्षन्तां" पापनिरासेन पालयन्तु । किंच " यद्रात्र्या " रात्रौ " पापमकार्षं " कृतवानस्मि, "मनसा" दुर्ध्यानादिना मनःसाधनेन करणेन वा, "वाचा" दुरुक्त्यादिना, "हस्ताभ्यां" सज्जनपीडादिना, "पद्भ्यां" सतां पादप्रहरणादिना, " उदरेण " अभक्ष्यभक्षणादिना, " शिश्ना " शिश्नेन्द्रियेण निषिद्धकाले स्त्रीनिषेवणादिना, "रात्रिः" रात्रिनामकः परमात्मा दुर्गा वा रात्रिदेवता "तदवलुम्पतु" नाशयतु । किं बहुना " यत्किंच दुरितं मयीदं " सर्वं दुरितं पापं तत्कर्तारं " मां " च " अमृतयोनौ " मोक्षकारणे परमात्मनि " सूर्ये " मुक्तामुक्तनियामके "ज्योतिषि"

परमात्मनि " जुहोमि " सर्वं पापं भस्मी करोमि । जीवस्य स्वरूपेण भस्मीकरणासंभवात्पापविशिष्टत्वेन भस्मीकरणं ज्ञातव्यम् । तदर्थमिदं जलं मुखाग्नौ " जुहोमि स्वाहा " सुहुतमस्तु । अनन्तरमाचमनं कुर्यात् । आपो हि ष्ठेति नवर्चस्य सूक्तस्याऽऽम्बरीषः सिन्धुद्वीप ऋषिः । आपं गायत्रं, पञ्चमी वर्धमाना, सप्तमी प्रतिष्ठा, अन्त्ये द्वे अनुष्टुभौ, मार्जने विनियोगः । तत्र तृचस्यार्थ उक्तः ।

अथ चतुर्थी—शं नो देवीरिति [ ऋ० सं० अ० ७ अ० ६ व० ५ ] । " आपो देवीः " देव्यः क्रीडादिगुणविशिष्टा अब्देवताः परमात्मा स्त्रीरूपाणि वा "नः" अस्माकं "शं" सुखं तद्दाः " भवन्तु " । तथा " अभिष्टये " अभीष्टप्रापणाय भवन्तु । तथा नः " पीतये " हरिकथामृतरसपानाय भवन्तु । तथा देव्यः " शम् " उत्पन्नानां रोगाणां शमनकर्त्र्यो भवन्तु । अनुत्पन्नानां रोगाणां पृथक्करणं कुर्वन्तु । किंच—आपो " नः " अस्माकम् " अभि " उपरितः " स्रवन्तु " प्रवहन्तु मच्छरीरोपरि प्रवाहं कुर्वन्त्वित्यर्थः ।

अथ पञ्चमी—ईशाना इति [ऋ० सं० अ० ७ अ० ६ व० ५] । "अपः" अब्देवताः परमात्मरूपाणि " भेषजं " संसारौषधं " याचामि " कथंभूता अपः—" वार्याणां " वरेण्यानां ज्ञानभक्त्यादिधनानां प्रसिद्धधनानां वा वारिप्रभवाणां व्रीहियवादिधनानां वा " ईशानाः " ईश्वरीः । पुनः कथंभूताः—" चर्षणीनां " प्रजानां " क्षयन्तीः " निवासयित्रीः ।

अथ षष्ठी—अप्सु म इति (ऋ० सं० अ० ७ अ० ६ व० ५ ) । ननु अप्सु भेषजसत्त्वे तद्याचनं युक्तं तदेव कुत इत्यत आह—अप्स्विति । सोमशब्दं हरौ व्याख्याति—सोम इति । उत्कृष्टा या मोमा तया सहितः सोमः । ऊ रुद्रो मा लक्ष्मीः । उश्च मा चोमे ताभ्यां सहितः सोम इत्यर्थः । न विद्यते मा प्रमा, इयत्ता यस्यासावमः । सारत्वात्सः । सश्चासावुश्चेति वा । सारत्वात्सः । उत्कृष्टत्वादुः ज्ञानवत्त्वान्मः । सश्च, उश्च, मश्च सोमः । उत्कृष्टपूर्णज्ञानवानित्यर्थः । उमया सहितः सोमो रुद्रः सोमश्चन्द्रो वा उत्कृष्टा माः प्रमाणानि तैः सहितः सोमो वायुः । " उ(भू)तानि वै विश्व(श्वा) उमा " इति श्रुतेः सह भूतैर्वर्तत इति सोमः । सर्वभूतानि प्रेरयतीत्यर्थः । एवंभूतः सोमोऽस्वब्रवीदिति । कथम् , " अप्सु " जलेषु " अन्तः " मध्ये " विश्वानि " सर्वाणि " भेषजा " भेषजान्यौषधानि सन्तीति । विश्वं संपूर्णं शं सुखं सुखमाधारम् । यद्वा—" विश्वशंभुवं" सर्वसुखकरम् " अग्निं " सर्वजगत्प्रवर्तकम् । एवंभूतं श्रीलक्ष्मीनारायणं प्रसिद्धाग्निं वा " अब्रवीत " । तद्याचनं

ধর্ম্মো জিতো হ্যধর্ম্মেণ জিতঃ সত্যোঽনৃতেন চ।
জিতা ভৃত্যৈস্তু রাজানঃ স্ত্রীভিশ্চ পুরুষা জিতাঃ ॥৩০॥
সীদন্তি চাগ্নিহোত্রাণি গুরুপূজা প্রণশ্যতি।
কুমার্য্যশ্চ প্রসূয়ন্তে তস্মিন্ কলিযুগে সদা ॥৩২॥
যুগে যুগে চ যে ধর্ম্মাস্তত্র তত্র চ যে দ্বিজাঃ।
তেষাং নিন্দা ন কর্ত্তব্যা যুগরূপাহি তে দ্বিজাঃ ॥৩২॥
যুগে যুগে চ সামর্থং শেষং মুনিভির্ভাষিতম্।
পরাশরেণ চাপ্যুক্তং প্রায়শ্চিত্তং প্রধীয়তে ॥৩৩॥
অহমদ্যৈব তদ্ধর্ম্মমনুস্মৃত্য ব্রবীমি বঃ।
চাতুর্ব্বর্ণ্যসমাচারং শৃণুধ্বং মুনিপুঙ্গবাঃ ॥৩৪॥
পারাশরমতং পুণ্যং পবিত্রং পাপনাশনম্।
চিন্তিতং ব্রাহ্মণার্থায় ধর্ম্মসংস্থাপনায় চ ॥৩৫॥
চতুর্ণামপি বর্ণানামাচারো ধর্ম্মপালকঃ।
আচারভ্রষ্টদেহানাং ভবেদ্ধর্ম্মঃ পরাঙ্মুখঃ ॥৩৬॥

---

জিত হইবে। (৩০) কলিযুগে অগ্নিহোত্র অবসন্ন ও গুরুপূজা রহিত হইবে; এবং রমণীগণ কুমারী অবস্থাতেই সন্তান প্রসব করিবে। (৩১) কল্পে কল্পে যেরূপ ধর্ম্ম প্রচলিত হয়, এবং সেই সেই সময়ে ব্রাহ্মণেরা যেরূপ আচার ব্যবহার করেন, তাহাতে তাহাদের নিন্দা করা অনুচিত; কারণ সেই ব্রাহ্মণেরাই যুগ রূপের অবতার। (৩২) যুগভেদে সামর্থ ভেদ ও অন্যান্য ভেদ সকল মুনিগণ কর্তৃক উক্ত হইয়াছে; কিন্তু (কলিযুগে) পরাশরের আদিষ্ট প্রায়শ্চিত্তই সর্ব্বপ্রধান। (৩৩) হে মুনিগণ! আমি অদ্যাই কলিযুগের পালনীয় ধর্ম্ম সকল স্মরণ করিয়া আপনাদের নিকট জ্ঞাপন করিতেছি; আপনারা তৎকালীন বর্ণ চতুষ্টয়ের আচার ব্যবহার শ্রবণ করুন। ৩৪ পরাশরের এই পুণ্যবিধায়ক মত পবিত্র ও পাপ নাশক। ধর্ম্ম সংস্থাপন ও ব্রাহ্মণের নিমিত্ত আমি বহু চিন্তানুশীলন দ্বারা ইহা স্মরণ করিতেছি। (৩৫) বর্ণ চতুষ্টয়ের স্ব স্ব আচার ব্যবহারই তাহাদের ধর্ম্ম রক্ষা করে, আচারভ্রষ্ট ব্যক্তিদিগের প্রতি ধর্ম্ম ও বিমুখ হয়। (৩৬)।

যে ব্রাহ্মণ, দেবতা ও অতিথির পূজা করেন, এবং সর্ব্বদা ষট্ কর্ম্মে সংলিপ্ত

ষট্‌কর্ম্মাভিরতো নিত্যং দেবতাতিথিপূজকঃ।
হুতশেষন্তু ভুঞ্জানোব্রাহ্মণোনাবসীদতি ॥৩৭॥
সন্ধ্যা স্নানং জপো হোমঃ স্বাধ্যায়ো দেবতার্চ্চনম্।
বৈশ্বদেবাতিথেয়ঞ্চ ষট্‌কর্ম্মাণি দিনে দিনে ॥৩৮॥
প্রিয়োবা যদিবা দ্বেষ্যো মুর্খঃ পণ্ডিতএব বা।
বৈশ্বদেবে তু সংপ্রাপ্তঃ সোহতিথিঃ স্বর্গসংক্রমঃ ॥৩৯॥
দূরাদ্ধানং পথিশ্রান্তং বৈশ্বদেবে উপস্থিতম্।
অতিথিং তং বিজানীয়ান্নাতিথিঃ পূর্ব্বমাগতঃ ॥৪০॥
ন পৃচ্ছেদ্গোত্রচরণং ন স্বাধ্যায়ব্রতানি চ।
হৃদয়ং কল্পয়েত্তস্মিন্ সর্ব্বদেবময়ো হি সঃ ॥৪১॥
নৈকগ্রামীণমতিথিং বিপ্রং সাঙ্গমিকং তথা।
অনিত্যং হ্যাগতো যস্মাত্তস্মাদতিথিরুচ্যতে ॥৪২॥

---

থাকিয়া হুতাবশিষ্ট ভক্ষণ করেন, তিনি কখনও অবসাদ প্রাপ্ত হন না (অর্থাৎ বিনষ্ট হন না) (৩৭) সন্ধ্যা, স্নান, জপ, হোম, স্বাধ্যায়, দেবতার অর্চ্চনা, বৈশ্বদেব ও অতিথির পরিচর্য্যা এই সকল কর্ম্ম নামে অভিহিত, দ্বিজগণ প্রতিদিন এই ষট্‌কর্ম্মাচরণ করিবে। (৩৮) প্রিয়ই হউক আর অপ্রিয়ই হউক, পণ্ডিতই হউক আর মূর্খই হউক, বৈশ্বদেবের সময় যিনি উপস্থিত হন তিনিই অতিথি, এবং তাঁহার সেবা স্বর্গ সুখপ্রদায়ক (৩৯) (পরিশ্রান্ত পিপাশার্ত্ত ব্যক্তি বৈশ্বদেবের সময় উপস্থিত হইলে) তাঁহাকে অতিথি বলিয়া জানিবে, যিনি ইহার পূর্ব্বে আইসেন তিনি অতিথি নামে বাচ্য নহেন। (৪০ অতিথির গোত্র, চরণ, স্বাধ্যায়, ব্রত ইত্যাদি কোন বিষয় জিজ্ঞাসা না করিয়াই তাঁহাকে হৃদয়ের সহিত পূজা করিবে, কারণ অতিথি সর্ব্ব দেবতা স্বরূপ (৪১) সাঙ্গমিক (কুটুম্ব কিংবা কোন কার্য্য সমাধান করিবার জন্য সমাগত ব্যক্তি) এবং এক গ্রাম নিবাসী বিপ্র অতিথি নামে বাচ্য নহে; কারণ যিনি সর্ব্বদা না আইসেন তিনিই অতিথি নামে অভিহিত হন। (৪২) যিনি পূর্ব্বে কখনও আতিথ্য গ্রহণ করেন নাই এরূপ অতিথি, সর্ব্বদা ব্রত নিরত সুব্রাহ্মণ ও বেদাভ্যাসপরায়ণ বিপ্র, এই ত্রিবিধ ব্যক্তি অপূর্ব্ব অথিতি নামে অভিহিত হইয়া থাকেন। (৪৩) বৈশ্বদেবের সময় যদি

अतस्तस्यापनोदार्थं लिखेद्व्याहृतियन्त्रकम् ।
त्रिकोणं दीर्घं रम्यं च देवानां सिद्धिदायकम् ॥
कोणमध्ये तु ह्रींकारं कोणाग्रे प्रणवं लिखेत् ।
दण्डेषु व्याहृतीस्तिस्रो मध्ये वरुणबीजकम् ॥
कनिष्ठाग्रेण वै तत्र विलिखेत्तु यथाक्रमम् ।
लिखित्वा मन्त्रराजं तु पश्चादर्घ्यं समाचरेत् " ॥
" एकं तु शत्रुनाशाय द्वितीयं हयनाशने ।
राक्षसानां वधायैकं दद्यादर्घ्यत्रयं बुधः " ॥

इति वचनादर्घ्यत्रयस्य विनियोगो बोद्धव्यः ।

" प्रत्यर्घ्यं तु जपेत्सम्यक्प्रतिचक्ष्वेति वै ऋचम् ।
पुनरर्घ्याधिकारार्थमात्मसंरक्षणाय च "

इति वचनात्प्रत्यर्घ्यमुक्तमन्त्रजपोऽपि द्रष्टव्यः । अस्य श्रीगायत्रीमन्त्रस्य ब्रह्मा, ऋषिः । गायत्री छन्दः । गायत्र्याकर्षणे विनियोगः(?) । ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्(?) । यदद्य कच्च वृत्रहन्नित्यस्य मन्त्रस्य कुश ऋषिः । सूर्यो देवता । त्रिष्टुप्छन्दः । प्रातःसंध्यावन्दनकालातिक्रमप्रायश्चित्तार्घ्यप्रदाने विनियोगः—

यद॒द्य कच्च॑ वृत्रहन्नु॒दगा॑ अ॒भि सू॑र्य ।
सर्वं॒ तदि॑न्द्र ते॒ वशे॑ [ ऋ० सं० अ० ६ अ० ६ व० २१ ] ।

अस्यार्थः—हे " वृत्रहन् " सत्कर्मानुष्ठानप्रतिबन्धकजलाद्याश्रितराक्षससंहारकारिभूतवृत्रासुरप्रभृतिदैत्यविघातिन् " इन्द्र " परमैश्वर्यसंपन्न " सूर्य " सूरिप्राप्यगायत्रीप्रतिपाद्यश्रीलक्ष्मीनारायण " अद्य कच्च " अल्पं बहु वा " यत् " प्रयोजनमुद्दिश्य यत्कर्म कर्तुम् " अभ्युदगाः " उदयं प्राप्नोषि " तत्सर्वमिन्द्र ते वशे " त्वदधीनं वर्तते तत्तस्माद्यत्कालातिक्रमणनिमित्तं पापं कर्म तदपि ते वशे । अतस्तदप्युत्, उद्धृतं यथा भवति तथाऽभ्युद्गास्तथा ममाऽऽविर्भूतो भवेति ।

" हृदयस्था तु गायत्री हृद्गता मुखनिःसृता ।
हत्वा चाऽऽदित्यशत्रूंश्च प्रविश्य हृदयं मम ॥
तिष्ठन्नर्घ्यत्रयं दद्यात्त्रिषु कालेषु बह्वृचः ।
प्रातर्मध्याह्नयोरप्सु सायाह्ने भुवि निक्षिपेत् ॥

करार्भ्यां तोयमादाय ब्रह्मास्त्रं च प्रयोजयेत् ।
ततः परं ब्रह्मदण्डं ततः शक्तिं प्रयोजयेत् ॥
सूर्याय असावादित्यो ब्रह्मेत्येवमुदीरयेत् ।
प्रदक्षिणीकृत्य ततः प्रविशेदाचमेत्ततः " इति ॥
" उत्थायार्कं प्रति प्रोक्षेद्गायत्र्या त्र्यञ्जलिं द्विजः ।
आदित्यमण्डलान्तस्थं ध्यात्वा विष्णुं सनातनम् " ॥

इति वसिष्ठोक्तिः ।

गायत्र्युपसंहारः । तदुक्तं संग्रहे—

" प्रत्यक्षरमृषिश्छंदो देवता शक्तिरेव च ।
तत्र वर्णं स्वरं बीजं ध्यानं फलमनन्तरम् ॥
उक्तवत्कीलकं मुद्राः संदृश्य(दर्श्य) द्वादश क्रमात् ।
संध्याकाले तु गायत्र्या अ[भि]मन्त्रो(न्त्र्यो)दकं क्षिपेत् ॥
प्रक्षिपेदूर्ध्वमित्यादि(?)....मुखतो भवेत् ।
आनुलोम्यात्प्रयुज्येत संहारः प्रतिलोमतः ॥
उपसंहृत्य गायत्री पश्चास्त्रैरपि संहृता(?) ।
तत्र मन्त्रान्पठेदन्यान्गायत्र्या पुष्टिदायकान् ॥
वर्णानां प्रातिलोम्येन ब्रह्मास्त्रमभिधीयते ।
पदानां प्रातिलोम्येन ब्रह्मशीर्षाभिधं भवेत् ॥
तकारमात्रं मन्त्रश्चेद्ब्रह्मपाशं भवेदथ " इति ॥

यद्वा ब्रह्मशिरःषोडशाक्षरमन्त्रस्य ब्रह्मा, ऋषिः । परमात्मा देवता । गायत्री छन्दः । अस्त्रोपसंहारे विनियोगः । ध्येयः सदेति ध्यानम् ।

" उत्तिष्ठ देवि गन्तव्यं पुनरागमनाय च ।
उत्तिष्ठ देवि स्थातव्यं प्रविश्य हृदयं मम " इति ॥

कालातीतदोषप्रायश्चित्तार्थे चतुर्थार्घ्यं दत्त्वा मन्त्रोपसंहारं कृत्वा " असावादित्यो ब्रह्म " इत्यन्तर्यामिप्रदक्षिणं कुर्यात् । अस्यार्थः—आदित्यान्तर्गतः परमात्मा ब्रह्म पूर्णः । तत आचम्य "मन्त्रतः परिवृत्याथ समाचम्य सुरादिकान्" इति सदाचारस्मृत्युक्तरीत्या नवग्रहान्वारणि(नावरण)देवान्केशवादींश्च तर्पयेत् । शुक्लपक्षे केशवादींश्च तर्पयेत् । कृष्णपक्षे संकर्षणादींश्च तर्पयेत् । ततः पृथिव्या इति मन्त्रेण पञ्चाङ्गन्यासं कृत्वा गायत्रीं जपेत् । तत्प्रकारः—हृत्कमले च गायत्रीशब्दितं नारायणमावाह्य पूर्वोक्तानामपां प्रसादेन लब्धभक्तियोगोपयोगिध्यानं कर्तुमायात्वित्यनुवाकं पठेत् ।

" आयात्वित्यनुवाकेन हृदये चार्कमण्डले ।
देवीमावाह्य गायत्रीं ततो ध्यायेद्द्विजोत्तमः " इति भारद्वाजः।

आयात्वितिमन्त्रस्य वामदेव ऋषिः । अनुष्टुप्छन्दः । गायत्रीलक्ष्मीनारायणो देवता । इति ऋष्यादिकं ध्येयम् ।

" अङ्गं न्यासं तथा ध्यानं सम्यगेव समभ्यसेत् ।
न्यासहीने हरेदायुर्ध्यानहीने तु निष्फलम् ॥
ऋषिहीने महाव्याधिर्भवत्येव न संशयः ।
तस्माद्देवर्षिच्छन्दांसि ज्ञातव्यानि महर्षिभिः " ॥

इति नारदीये श्रीविष्णुमाहात्म्यवचनात् । आयातु [ तै० आ० प्र० १० अ० ३४ ] इत्यनुवाकं पठेत् । अस्यायमर्थः—" देवी " क्रीडादिगुणविशिष्ट " मे वरदा " अस्मदभिमतार्थप्रदा " छन्दसाम् " उष्णिगादिच्छन्दस तदभिमानिदेवतानां च " माता " सुखदानेन मातृतुल्या जनिका वा यथायोग्यं संबन्धः । " गायत्री " गानत्राणकर्त्री गायत्रीशब्दवाच्यम् " अक्षरं ब्रह्मसंमितं " विष्णुनामकं ब्रह्मैव शब्दस्वाभाव्याद्गायत्रीशब्दित लक्ष्मीः । भगवतो लक्ष्मीरूपेण विद्यमानत्वात्स्त्रीलिङ्गप्रयोगः । अक्षरमनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णतेत्युक्तचतुर्विधनाशरहितम् । अक्षयं तेषु सिद्धत्वात् । उत्तरानुवाके देवानां धामनामासीत्युक्तेश्च । एवंभूतो गायत्रीनामकः षड्विधो विष्णुर्मम संनिधौ " आयातु " आगच्छतु अवनार्थमिति शेषः । किंच " सर्ववर्णे महादेवि संध्याविद्ये सरस्वति " इति गायत्र्याः संबोधनम् । गायत्री सावित्री सरस्वतीति गायत्र्यास्त्रीणि रूपाणि। तत्र गायत्री रक्तवर्णा सावित्री श्वेतवर्णा सरस्वती कृष्णवर्णा । अत एव सर्ववर्णेत्युक्ता । महती च सा देवी च महादेवी । तस्याः संबुद्धिर्हे महादेवि । संधी[यते] संपदा यजमानोऽनयेति संध्याविद्या ज्ञानरूपा तस्याः संबुद्धिर्हे संध्याविद्ये । सन्ति तीर्थानि नियम्यत्वेन यस्यां सा सरस्वती तस्याः संबुद्धिर्हे सरस्वति । त्रिरूपे गायत्रि मम कर्माणि गायत्रीशब्दवाचकम् "इदं" विष्णुनामकं " ब्रह्म जुषस्व" जोषयस्व युष्मत्सेवा मम यथा भवति तथा कुर्वित्यर्थः । जायते वर्धते परिणमत इत्युक्तविकाररहितं वा । "संमितं" निर्दोषत्वानन्तकल्याणगुणाकरत्वाभ्यां श्रुतिस्मृत्यादिप्रमाणपरिमितं " ब्रह्म " पूर्णं न तु गायत्रीशब्दवाच्यं देवतान्तरं प्रसिद्धं छन्दो वा । "स विष्णुराह हितं ब्रह्मेत्याचक्षते" इत्युक्तेः । नारायणोपनिषदि—" यतः प्रसूता जगतः प्रसूतिः " इत्यारभ्य "तदेव ब्रह्म

परमं कवीनाम् " इत्युक्तेश्च। अग्निशब्दवाच्योऽसाविति चेतोर्पणार्थं हि निगद्यत इति "चेतोर्पणनिगदात्तथाहि दर्शनम्" इति सूत्रान्तरे व्याख्यातत्वात्।

" सर्वच्छन्दोभिधो ह्येष सर्वदेवाभिधो ह्यसौ।
सर्वकालाभिधो ह्येष तेषां तदुपचारतः "

इति सूत्रभाष्योदाहृतवामनवचनाच्च। अनेन सविता गायत्री सरस्वतीत्यादिभूर्भुवः स्वरित्यादिदेवतावाचकशब्दसद्भावान्न विष्णुपरत्वमिति चोद्यं परिहृतम्। देवताशब्दैर्लोकशब्दैश्च गायत्रीनामकविष्णोरेव वाच्यत्वस्य प्रमाणेऽन्तर्भावितनियोजये(ना)द्वा। "मे" मां "जुषस्व" प्रीणय मत्संनिध्यागमनमत्सेवया मत्प्रीतिकरत्वात्। जुषी प्रीतिसेवनयोरिति धातुः। तदुभयफलमाह—यदह्नादिति। " यत्पापमह्नात्" अह्नि अहनि "कुरुते तत्" पापम् " अह्नात्प्रतिमुच्यते" अहर्नियामकात्त्वत्तः प्रमुच्यते। "यत्पापं रात्र्यात्" रात्रौ " कुरुते तत् " पापं " रात्र्यात्प्रतिमुच्यते " रात्रिनियामकात्त्वत्तः प्रमुच्यत इत्यर्थः। ननु सैषा त्रिपदा गायत्रीत्युक्तं त्रिपात्त्वं छन्दःपक्षे घटते विष्णुपक्षे न घटत इति चेन्न। गायत्रीनामकविष्णोर्धामत्रयस्थस्वरूपभूतैरंशैस्त्रिभिरेकेन सर्वजीवाख्यभिन्नांशेन चतुष्पात्त्वोपपत्तेः। भिन्नांशपरित्यागेन त्रिपात्त्वोपपत्तेश्च। " पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि " इति वचनात्।

तदुक्तं छान्दोग्ये (?)—

" त्रिभिः सरूपपादैश्च भिन्नेनैकेन चैव हि।
गायत्रीनामको विष्णुश्चतुष्पात्संप्रकीर्तितः॥
भिन्नपादः सजीवन(?)स्यात्पादस्य मात्रतः।
सरूपपादा विष्णु(ष्णो)स्तु त्रयो [वै] दिवि संस्थिताः॥
नारायणो वासुदेवो वैकुण्ठ इति चिन्मयः।
परब्रह्मेति भगवान्सर्वगः संप्रकीर्तितः "॥

स एव जीवस्य हृदयाकाश आस्थितो यो यो हृदयं गतः सोऽयं जीवान्तर्व्याप्य संश्च स्थि*.... .... त्योर्जीवान्तरे योऽसौ स जीवहृदि संस्थितः। एवं चापि चतुष्पात्त्वमित्येतेन वचनेन स्वरूपभूतांशचतुष्टयेनैव चतुष्पात्त्वमुपपादितं भवति।

गायत्रीनामकस्य विष्णोः षाड्विध्यं यदुक्तं तदपि तत्रैवोक्तम्—

" गायत्र्यां संस्थितो विष्णुः स्त्रीरूपः सूर्यसप्रभः।
द्वितीयश्चैव मत्स्यादिभूतानामवतारगः॥

* अत्र किंचित्त्रुटितम्।

तृतीयो वह्नि(ह्नि)संस्थश्च स्त्रीरूपो हयशीर्षकः।
चतुर्थः पृथिवी संस्थो+···· ···· ···· ···· ····
जीवस्यान्तर्गतो व्याप्य शरीरमितिनामकः।
गायत्रीनामको विष्णुरेवं षड्विध उच्यते " ॥

उक्तश्च षड्विधो विष्णुर्गायत्री षडंशप्रतिपाद्यः। अष्टाक्षरस्य त्रिवारोच्चारणे गायत्र्यभिव्यक्ता। अथवा द्वादशाक्षरद्विरावृत्त्या चतुर्विंशतिवर्णात्मिका गायत्र्यभिव्यक्ता। व्याहृतिव्यस्तसमस्तैरष्टाक्षरव्याहृतौ त्रिवारमुच्चार्यमाणायां गायत्र्यभिव्यक्तेति पक्षत्रयम्। प्रथमोच्चारणे प्रथमः पादो द्वितीयोच्चारणे द्वितीयः पादस्तृतीयोच्चारणे तृतीयः पादः। वर्णप्रतिपाद्या गायत्रीं तृतीय(?) केशवादिकृष्णान्ता भगवद्रूपविशेषा अष्टाक्षरप्रतिपाद्यैर्वासुदेवादिभिश्चाभिव्यक्ताः। चतुष्पादगायत्री प्रणवेन सह। प्रणवं विना त्रिपादा। प्रणवप्रतिपाद्यो व्याहृतितृतीयप्रतिपाद्यो गायत्रीतृतीयपादप्रतिपाद्यो नवावरणसहितब्रह्माण्डव्यापिसकलचेतनान्तर्गतमुख्यप्राणव्यापिसंकर्षणः प्रणवप्रतिपाद्यः समस्तव्याहृतिप्रतिपाद्यः सर्वव्यापिवासुदेवः। अथवा श्वेतद्वीपानन्तासनवैकुण्ठसर्वजीवान्तानि चत्वारि रूपाणि गायत्रीपादचतुष्टयप्रतिपाद्यानि। अथवा रूपबाह्यव्यापी[नि] स्वरूपबाह्यस्थानि चत्वारि रूपाणि प्रतिपाद्यानि। गायत्रीमुखेऽग्नेरन्तर्यामिपरशुरामो वर्तते। एवं ज्ञाने गायत्रीफलं भवति। तदभावे निष्फलः समग्रगायत्रीप्रतिपाद्यः समस्तजगत्सर्जकत्वात्सवितृनामको नारायणः। केशवादीनामायुधभार्याणां नामभेदो ग्रन्थान्तरोक्तो ग्रन्थगौरवभयान्नात्रोच्यते।

एवमभिमुखां गायत्रीं श्रीधरमन्तर्हृदि पश्यन्प्रीत्या पुलकाङ्कितसर्वाङ्गः समस्तमन्त्रेण स्तौति—

ओजोऽसीति ( तै० आ० प्र० १० अ० ३५ )। ओजोऽसीत्यस्य मन्त्रस्य प्रजापतिर्ऋषिः। पङ्क्तिश्छन्दः। परब्रह्म देवता। जुभुभूधरधारणाः शक्तिस्तेजोवा तेजःशब्देन वोजोसि(?) लक्ष्यते गुणगुणिनोरभेदात्। एवमुत्तरत्रापि। " सहः " सहनशक्तिः। " बलं " सारः प्राणबलं वा। " भ्राजः " दीप्तिः शारीरिकी श्रीः। " देवानाम् " इन्द्रादीनां स्तोत्रेण(?) वा " धाम " शरणं सुखस्थानमसि " नाम " च " असि " नाम्नां कर्ताऽसि। " हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि " " नामरूपे व्याकरोत् " इति श्रुतेः।

---

+ अत्रापि त्रुटितम्।

" नाम रूपं च भूतानां कृत्यानां च प्रपञ्चना ।
देव(वेद)शब्देभ्य एवासौ देवादीनां चकार सः "

इति विष्णुपुराणवचनाच्च । " विश्वमसि " विश्वनामकोऽसि । " विश्वं विष्णुर्वषट्कारः " इति सहस्रनामसु पाठात् । नामान्तरस्याप्युपलक्षणमेतत् । " विश्वायुः " विश्वयतीति विश्वं जगत्तस्याऽऽयुरपसंगतां तिरित्यर्थः(?) । अय पय गतौ भावे इमत्ययः(?) । आयुष्प्रद इति वा नरनामकभगवज्जातत्वाद्वा विश्वशब्देनोच्यते तस्य तस्य विश्वस्याऽऽश्रयो नारायणो वा विश्वायुः(?) ।

" नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।
तेषामयनभूतो यः स नारायण उच्यते " इतिवचनात् ॥

" सर्वमसि " सर्वकायप्रतिष्ठत्वेन सर्वनियामकोऽसि । " यदधीना यस्य सत्ता तत्तदित्येव भण्यते " इति न्यायेन सर्वस्वमिति वा । " तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत्" इति श्रुतिः । सर्वकायान्प्रविशमानः सर्वायुः सर्वस्य जीवनहेतुः । "येन जातानि जीवन्ति" इति प्रसिद्धेः । " सर्वायुरसि " सर्वमोक्षप्रदोऽसीत्यर्थः । सर्वायुः सर्वशब्दस्य मोक्षपरत्वेनोपनिषदि व्याख्यातत्वात् । " अभिभूः " तिरस्कर्ताऽसि सर्वजपविघ्नकर्तॄणां पापानाम् । " ओम् " असि पूर्णगुणोऽसि । एवमोजोऽसीत्यादीनि(?) । गायत्रीमिति । गायत्रीशब्दार्थस्तु प्रागेवोक्तः । आवाहनमृष्यादिस्मरणपूर्वकम् ।

तदुक्तमाग्नेये—

" आवाह्य पञ्चगायत्रीमायात्वित्यनुवाकतः ।
ऋषिच्छन्दोदेवताश्च स्मृत्वा सम्यग्जपेद्बुधः " इति ॥

जपशब्दार्थस्तत्रैवोक्तः—

" जकारो जन्मविच्छेदः पकारः पापनाशकः ।
तस्माज्जप इति प्रोक्तो जन्मपापविनाशकः " इति ॥

ध्यानप्रकारविशेषस्तत्फलं च तत्रैवोक्तम्—

" गायन्तं त्रायते यस्माद्गायत्र्येषोच्यते बुधैः ।
सऋषिच्छन्दोदैवत्यां सायुधां सहमुद्रिकाम् ॥
सध्यानां सहवर्णां च सरूपां च सवाहनाम् ।
त्रिमूर्तिरूपां गायत्रीं त्रिसंध्यायां जपेत्सुधीः ॥
सर्वबन्धविनिर्मुक्तो विष्णुलोके महीयते ।
सहस्रपरमां देवीं शतमध्यां दशावराम् ॥
गायत्रीं संजपेन्नित्यं यतवाक्कायमानसः " इति ॥

उक्तरीत्या जपसंख्या च द्रष्टव्या ।

त्रिसंध्यासु त्रिरूपगायत्रीध्यानं सप्रपञ्चं तत्रैवोक्तम्—

“ प्रभाते रविबिम्बस्थां रक्तवर्णां कुमारिकाम् ।
हंसारूढां साक्षमालामृग्वेदां ब्रह्मदैवताम् ॥
मध्यंदिने च सावित्रीं रविबिम्बस्थितांशजाम् (?) ।
यजुर्वेदमयीं रुद्रदैवत्यां पाण्डुनन्दन ॥
सायं सरस्वतीं सूर्यमध्यस्थां कृष्णवर्णनीम्(?) ।
वृद्धां चतुर्भुजां शङ्खचक्रां पक्षीन्द्रवाहनाम् ॥
सामवेदमयीं विष्णुदैवत्यां क्रमशो जपेत् ” इति ॥

गायत्रीजपाकरणे नैष्फल्यमुक्तं तत्रैव—

“ गायत्रीं तु परित्यज्य येऽन्यमन्त्रमुपासते ।
मुण्डकरा वै ते ज्ञेया इति वेदविदो विदुः ” इति ॥

हृन्मण्डपवर्णनपुरःसरं भगवद्ध्यानमुक्तं तत्रैव—

“ हृदयेऽष्टदलं पद्मं कर्णिकामध्यसंस्थितम् ।
ओंकारनालविलसद्वेदगन्धि रविप्रभम् ॥
तन्मध्यनवरत्नाढ्यं तप्तहाटकसंनिभम् ।
तस्योपरिष्टाच्चतुरं नानारत्नविभूषितम् ॥
विद्रुमस्फटिकाकारशतस्तम्भसमन्वितम् ।
सूर्यकोटिप्रतीकाशं विमानेन विराजितम् ॥
मुक्तादामविभूषाढ्यं चित्रध्वजपताकिनम् ।
मल्लिकाकुन्दमान्दारकेतकीचम्पकादिभिः ॥
अन्यैश्च गन्धपुष्पैश्च संभृतादेव कर्णितम् ।
महाशाखास्फुरत्पुण्यकल्पल(वृ)क्षान्तरस्थितम् ॥
रत्नमण्डपमध्यस्थं स्वर्णपद्मोपरि स्थितम् ।
सिंहासने समारूढं सूर्यकोटिसमप्रभम् ॥
विष्णुं चतुर्भुजं लक्ष्मीभूमिभ्यां पार्श्वशोभितम् ।
किरीटहारकेयूरमण्डनैर्मङ्गलाकृतिम् ॥
कटिसूत्रब्रह्मसूत्रनूपुरैरुपशोभितम् ।
श्रीवत्सवनमालाढ्यं तुलसीदामभूषणम् ॥
अनेकदिव्याभरणं कनकाभरणोज्ज्वलम् ।
वरदाभयहस्ताढ्यं शङ्खचक्रस्फुरत्करम् ॥

पीताम्बरधरं विष्णुं प्रसन्नवदनं शुभम् ।
मनोहरं दयामूर्तिं मन्दहासमुखाम्बुजम् ॥
अणिमाद्यैर्मूर्तिमद्भिरष्टैश्वर्यसमन्वितम् ।
बद्धाञ्जलिपुटैर्भक्तैर्ब्रह्मरुद्रादिभिः सुरैः ॥
गायद्भिर्नारदाद्यैश्च सनकाद्यैश्च सेवितम् ।
स्तुतं परमकल्याणं सूतमागधबन्दिभिः ॥
अनेकदिव्याभरणं रणत्कङ्कणशोभितम् ।
दिव्यस्त्रीवरयुग्मेण मन्दपार्श्वद्वये(?) हरिम् ॥
स्वर्णदण्डविचित्राभ्यां चामराभ्यां विराजितम् ।
माधवं परमात्मानं भक्तवत्सलमीश्वरम् ॥
ध्यात्वैवं हृदि वा सूर्यमण्डले माधवं जपेत् " इति ॥

जपत्रैविध्यं तत्रैवोक्तम्—

" वाचिकश्च तथोपांशुर्मानसश्च जपास्त्रिधा ।
उत्तरोत्तर उत्कृष्टः सर्वपापप्रणाशनः ॥
स्वरत्रयसमायुक्तो वर्णव्यक्तिपरो जपः ।
स वाचक इति ख्यातो स्त्राक्षरोच्चरितो नृप ॥
ईषदुच्चरितो राजन्किंचिदोष्ठौ प्रचाल्य च ।
स उपांशुरिति ख्यातः किंचिच्छब्दयुतो नृप ॥
मानसो मनसा चिन्त्यो ध्यानमस्तकवर्णनात् " इति ॥

जपकाल इत्थंभावस्तत्रैवोक्तः—

" न जल्पन्न हसन्नेक्षन्न शब्दन्स्पर्शयन्नृप ।
न संचरन्न चाऽऽक्रम्य न चान्यानवलोकयन् ॥
न चलासनमाक्रम्य नापवित्रकरद्वयः ।
उदये प्राङ्मुखस्तिष्ठन्संख्ययैवं जपेद्बुधः ॥
असंख्यातोऽपवित्रश्च जपो निष्फलतामियात् ।
पर्वभिर्गणयेत्संख्यां नाक्षमालादिभिर्नृप ॥
गायत्र्या वेदमूलत्वाद्वेदः पर्वसु गीयते ।
आरभ्यानामिकामध्यपर्व प्रदक्षिणं क्रमात् ॥
तर्जनीमूलपर्यन्तं संख्यया त्रिपदां जपेत् ।
मध्यपर्वद्वयं मेरुस्तं मेरुं नातिलङ्घयेत् ॥
व्यस्तपादां तु गायत्रीं यो जपेत्स हरिप्रियः ।
जपेत्समस्तपादां यः स भवेद्ब्रह्मराक्षसः ॥

अष्टोत्तरसहस्रं वा ब्राह्मण्यार्थं समश्नुते ।
पश्चाद्वैश्यो भवेद्विप्रः क्षयरोगी हि जायते ॥
तस्मात्स्नात्वा यथाशक्ति जपेदाभास्करोदयम् " इति ॥

" छन्दर्षीनावाहयामि " छन्दर्षिनामकगायत्रीवेषानावाहयामीत्यर्थः । ते च परोरजोमुखाः प्राणपर्यन्ता द्रष्टव्याः । " वेत्थ सावित्रीं न वेत्थेति स होवाच वेदेति । सा कस्मिन्प्रतिष्ठितेति । परोरजसीति । कस्तद्यत्परोरजा इति होवाच । य एव तपति य एषोऽर्वाग्रजा इति स कस्मिन्वे(न्वे)ष इति सत्य इति । किं तत्सत्यमिति । तप इति । [ किं तत्तप इति । बलमिति । ] किं तद्बलमिति । प्राण इति होवाच " इति श्रुतिः । " श्रियमावाहयामि " स्पष्टमेतत् । षट्सु स्त्रीरूपगायत्र्या उत्कृष्टत्वात्(?) । ऋष्यादिस्मरणार्थमृष्यादिकमाह—गायत्र्या इति । स्पष्टोऽर्थः । गायत्रीमुखादौ स्थितदेवानाह—अग्निरिति । गायत्रीमुखेऽग्नेरन्तर्यामी परशुरामो वर्तते । गायत्रीशिरसि ब्रह्माण्डान्तर्यामी । हृदये विष्णुः । शिखायां रुद्रान्तर्गतसंकर्षणः । याऽसौ " पृथिवी " [ *स्तवराह ]प्राणादिशब्दवाच्यभगवद्रूपप्राणादिव(यु)ता " सप्राणा " मुख्यप्राणनियामिका । " सांख्यायनसगोत्रा " सांख्यायनसगोत्रोत्पन्नाऽभिव्यक्ता । " चतुर्विंशत्यक्षरा " चतुर्विंशत्यक्षरप्रतिपाद्यकेशवादिरूपा । " त्रिपदा " पादत्रयप्रतिपाद्यानिरुद्धादिस्वरूपिणी । [ " षट्कुक्षिः " ] प्राग्दक्षिणा(ण)पश्चिम(मो)दीर्घो(च्यो)र्ध्वाधोभागदेवतासहिता । एवंविधा गायत्री " पञ्चशीर्षा " पञ्चशीर्षवती । " उपनयने " उपनयनाख्ये कर्मणि, विनियुज्यत इति " विनियोगः " ।

ततः प्राणायामं कृत्वा प्रोद्यदादित्यवर्ण इत्यादिना ध्यात्वा गायत्रीं जपेत् । तदनन्तरमुत्तमे शिखर इत्यादिमन्त्रेण गायत्रीमुपसंहृत्य जातवेदस इति सूर्यशब्दवाच्यं नारायणमुपतिष्ठेत । प्रादक्षिण्येन देवादींश्च नमस्कुर्यात् ।

तदुक्तमाग्नेये—

" उद्वासयेत्तु गायत्रीमुत्तमेत्युदिते रवौ ।
प्राग्दक्षिणं नमस्कुर्यात्सर्वाः संध्यादिदेवताः ॥
संध्या च सा च गायत्री सावित्री च सरस्वती ।
चतुर्भ्यश्च( चतसृभ्यो ) नमस्कुर्यात्प्राणायाम(त्प्रणवादि)-
नमोन्तकम्(कैः) ॥

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने—" सा ' योनिः ' योनिस्थानीया सर्वप्रसवहेतुत्वात् " इत्यपेक्षितो ग्रन्थः ।

मित्रस्येत्युदितं सूर्यमुपतिष्ठेत्तु पूर्वतः।
श्रौतैः स्मार्तैस्तथा सौरैर्मन्त्रैर्नानाविधैरपि ॥
अभीष्टदं नमस्कुर्याद्भास्करं भवभञ्जनम् ॥
सर्वाभ्यो देवताभ्यश्च कामोऽकार्षीच्च संनमेत् ॥
दिशश्चतस्रः प्राच्याद्याः प्रणवादिनमोन्तकैः ।
चतुर्थ्यन्तैर्नमस्कुर्यादूर्ध्वाधः संक्षिपेद्दि(दृ)शौ ॥
अन्तरिक्षं च भूमिं च दण्डवत्प्रणमेत्ततः ।
एवं यः कुरुते विद्वान्गायत्रीजपमुत्तमम् ।
ब्रह्महाऽपि लभेत्स्वर्गं किमुत ब्रह्मवादिनः ॥
एकाहं जपहीनश्च संध्याहीनो दिनत्रयम् ।
द्वादशाहमनग्निश्च शूद्र एव न संशयः " इति ।

उत्तमे ( तै० आ० प्र० १० अ० ३६ ) इति गायत्र्युद्वासनमन्त्रस्य वामदेव ऋषिः । अनुष्टुप्छन्दः । श्रीलक्ष्मीर्गायत्री च देवता । हे 'देवि' क्रीडादिगुणविशिष्टे विष्णुपत्नि विष्णुरूपे चास्माकमनुग्रहार्थं मत्प्रार्थनयाऽत्राऽऽयाता त्वं " ब्राह्मणेभ्योऽभ्यनुज्ञाता " अभ्युनुज्ञाऽनुमतिस्तां प्राप्ता, ब्राह्मणेष्वनुग्रहं कृत्वेति यावत् । ' उत्तमे ' उत्तुङ्गे ' पर्वतमूर्धनि ' पर्वतानां मेरुवेङ्कटगिरित्रिकूटदैवतगोवर्धनादिक्रीडापर्वतानां मूर्धनि मस्तकप्रदेशे तत्रापि ' शिखरे ' ' यथासुखं ' क्रीडादिविहारसुखमनतिक्रम्य ' गच्छ ' याहि । मां च यथासुखमाज्ञाप्य गच्छेति वा । जात इत्युप(त्तम)शिखरविशेषणम् । क्रीडार्थं युवाभ्यामुत्पन्न इत्यर्थः । लक्ष्मीविष्ण्वोः संबोधनं वा । एतत्पक्षे जाते अभिव्यक्ते इत्यर्थः । विष्णोरपि स्त्रीरूपत्वात्स्त्रीलिङ्गनिर्देशः । यद्वा पृथिव्या(?) आत्मानन्तासनपृथि[वि(?)]संबद्धत्वादुत्तमेऽत्युत्कृष्ट उत्तमे वाऽत एव शिखरे शिखरतुल्ये श्वेतद्वीपानन्तासनस्थविमाने पर्वतमूर्धनि मेरोरुपर्युत्तमेऽत्युन्नते वैकुण्ठे च जातेऽभिव्यक्ते हे देवि त्वं सुखं गच्छ । त्रिपादस्यामृतं दिवीत्युक्तगायत्रीत्रिरूपस्थधामत्रयस्थस्य दिवःपरस्थत्वद्य(द्यु)स्थत्वसमर्थनाय ' उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्' इतिसूत्रव्याख्यानानु(व)सरे भाष्यतत्त्वप्रकाशिकयोः श्वेतद्वीप[स्य]

"पृथिवीस्थेषु सर्वोच्चलोकोऽनन्तासनात्मकः ।
अनन्तशायिनश्चैव तथाऽनन्तासनं हरेः ॥
बहुलक्षोच्छ्रितेऽनन्ते यतश्चित्प्रकृत्यात्मनि ।
ततो देवीति कथित(तं)श्रुतौ "

इत्यादिवचनैर्मेधाद्यपेक्षयोभतत्वघुशब्दवाच्यत्वयोरुपपादितत्वादयमेवैतन्मन्त्रार्थो मुख्य इत्यवगम्यताम् । अस्मिन्मन्त्रे ब्रह्मशब्दो(?) वेदपरः । 'ब्रह्म वेदस्तपः सत्यम्' इत्युक्तेः ।

'मन्त्रस्वाध्याययज्ञादिमनुमोक्षपितामहाः ।
तपोविष्णुर्करुद्राश्च चन्द्रेन्द्रौ ब्रह्मसंज्ञिताः'

इति नैघण्टुकवचनाच्चेति । स्वपादेन समस्तवेद इतिमन्त्रं पठन्(?)शरीरेन्द्रियदार्ढ्यप्रार्थनफलभूतमभीष्टान्तरं प्रार्थयते—जातवेदसे (ऋ० सं० अ० १ अ० ७ व० ७) इत्यादिना । जातवेदस इत्यस्य मन्त्रस्य कश्यप ऋषिः । जातवेदा अग्निर्देवता । त्रिष्टुप्छन्दः । संध्योपस्थाने विनियोगः । अस्यार्थः—यथा लोके "नावा सिन्धुं" नाविको "विश्वा" विश्वानि "दुर्गाणि" दुःखेन प्राप्तानि "नः" अस्माकमथो जलानि "अतिपर्षत्" अत्यन्तं नाशितवान् । किंच यः "अरातीयतः" आत्मनोऽरातिञ्शत्रून्संपादयितुमिच्छत आत्मनः शत्रुत्वमिच्छतो वा पुरुषान् । "निदहाति" नितरां भस्मी चकार । दह भस्मीकरण इति धातोः । "स वेदः" सकलवेदप्रतिपाद्यः "अग्निः" अग्न्यन्तर्गतोऽग्निनियामकोऽग्निशब्दवाच्यः । एवंभूताय तस्मै "जातवेदसे" जातं सर्वं वेत्तीति जातवेदाः । तस्मै परमात्मने जाता वेदा यस्य ते( स्मात्स ) जातवेदः । तस्मै जातवेदाय, "सोमं" सोमलताविशेषं "सुनवाम" सोमरसनिष्पत्त्यर्थं सोमलतानिष्पीडनं करवाम । यद्वा सोमं सोमरसं सुनवाम तदुत्पत्तिं करवाम । अथवा सोमं मनः सुनवाम भगवद्विषयं करवामेति ।

तच्छंयोरिति । "तत्" गायत्रीप्रतिपाद्यं रूपं "शंयोः" सुखप्राप्त्यर्थम् "आ वृणीमहे" समन्ताच्छरणं गच्छामः । वयमिति शेषः । किमर्थं "यज्ञाय" श्रौतस्मार्तसकलयज्ञानुष्ठानसाफल्याय "यज्ञपतये" यज्ञपतिं देवं "दैवीः" च देवशब्दवाच्यभगवत्संबन्धिलीलाश्च "गातुं" प्रतिपादयितुं "स्वस्तिः" कल्याणम् "अस्तु" । न केवलमस्माकं "मानुषेभ्यः" च भगवज्ज्ञानिभ्यश्च "स्वस्तिः" अस्तु । किंच "द्विपदे चतुष्पदे शं नोऽस्तु" भवतु । "भेषजं" संसारौषधभूतम् । "ऊर्ध्वं" सर्वोत्कृष्टं गायत्रीप्रतिपाद्यं ब्रह्म "जिगातु" जयतु ।

एवंभूताय महानुभावाय तुभ्यमस्माभिर्देयं किमपि नास्ति किंतु भूयिष्ठां ते नमउक्तिं विधेमेतिशास्त्रोक्तरीत्या भूयो भूयो नमस्कारान्करोमीत्याह—ॐ नमो ब्रह्मणे (आ० गृह्यसू० अ० ३) इत्यादिना । ब्रह्मादिशब्दवाच्याय महते विष्णवे नम इति । नम इति बहवारोक्तिस्तु आदरार्था । ततः प्राच्या-

दीन्नमस्कुर्यात् । तत्र मानं स[मनन्तर]मुक्तम् । नमस्कारकाले वेदाद्या वाडवा मन्त्राः पठनीया इत्युक्तम् । सर्ववेदेषु यत्पुण्यमितिश्लोकपठनानन्तरं चतुःसागरमित्युक्त्वैतद्गोत्रोऽहं भो अभिवादय इति सूर्यं नमस्कुर्यात् ।

तदुक्तमाग्नेये—

"अभिवादनमन्त्रेण स्वगोत्रं नाम शर्म च ।
उक्त्वाऽभिवादयेत्सूर्यमास्ति(र्यं मन्त्रि)वरो(र) इमं स्मरे(रन्)" इति ।

अत्र प्राच्यादिशब्देन तत्तद्दिग्देवता ग्राह्याः ।

"प्राच्याः प्राणास्तथेन्द्राद्या दक्षिणाश्च यमादयः ॥
प्रतीच्या वरुणाद्यास्तु सोमाद्या उत्तराः स्मृताः ।
शेषमित्राववातापी(विघ्नश्च वी)न्द्रकामा उदत्क(वुदाहृ)तौ ।
सभार्याः कोणपैः सार्धं चत्वारो दिग्विदिक्ष्विति" ।

पूर्वदिग्देवतेन्द्रः शची, आभ्यामुपास्यमानो वामनो द्वितीयानपगमो हयग्रीवो नारायणोऽनिरुद्धः प्रतिहारनामकोऽनिरुद्धः पवमाननामको नारायणः प्रद्युम्नः प्रकाशनामको वासुदेवो वासुदेवव्यूहः । प्राणनामकः शेषः । अपाननामिका भारती । व्याननामको वायुः । उदाननामिका रमा । समाननामको नारायणः । आग्नेये—अग्निः स्वाहा, आभ्यामुपास्यमानो परशुरामो द्वितीयानपगमो हयग्रीवो नारायणोऽनिरुद्धः । दक्षिणे—यमः श्यामला, आभ्यामुपास्यमानो रामचन्द्रो द्वितीयानपगमो हयग्रीवनारायणानिरुद्धाः । प्रतिहारनामकोऽनिरुद्धः । पवमाननारायणः । प्रद्युम्न० नामिका भारती । व्याननामको वायुः । उदाननामिका रमा । समाननामको नारायणः । निर्ऋतिकोणे—निर्ऋतिकं नाम(?) । आभ्यामुपास्यमानो यमादवतीर्णः कृष्णो द्वितीयानपगमो हयग्रीवनारायणानिरुद्धाः । पश्चिमे—वरुणो भारती, आभ्यामुपास्यमानो नारायणो द्वितीयानपगमो हयग्रीवनारायणानिरुद्धाः । प्रतिहारनामकोऽनिरुद्धः । पवमाननामकनारायणः । प्रद्युम्न(म्नः)प्रकाशनामकवासुदेवः प्रद्युम्नव्यूहः । प्राणनामकशेषः । अपाननामिका भारती । व्याननामको वायुः । उदाननामिका रमा । समाननामको नारायणः । वायव्ये—प्रवहः प्रावही, एतदुपास्यो नरसिंहो द्वितीया० निरुद्धः । उत्तरे—चन्द्रस्तद्भार्या रोहिणी, एतदुपास्यः कल्की द्वितीयानपगमो हयग्रीवनारायणानिरुद्धाः । प्रतिहार० । ऐशान्ये—रुद्रः पार्वती, एतदुपास्यः संकर्षणो द्विती० । ऊर्ध्वदिशि—गरुडः सौपर्णी कामरती । एभिरुपास्यौ नारायणप्रद्युम्नौ । अधोदिशि—शेषो वारुणी मित्रो मैत्री । एतदुपास्यः शेषशायी । अवान्तरदिशि—गणेशस्तदुपास्यः संकर्षणः । एकोनपञ्चाशान्मरुत-

स्तदुपास्योऽनिरुद्धः स्वर्नामकानिरुद्धः संकर्षणप्रतिहारनामकानिरुद्धो निधननामकसंकर्षणरामः ।

इति प्रातःसंध्याप्रकरणम् ।

---

अथ माध्याह्निकमुच्यते ।

आपः पुनन्त्विति मध्याह्नेऽपः पिबेत् ।

तदाह भरद्वाजः—

" सायमग्निश्च मेत्युक्त्वा प्रातः सूर्येत्यपः पिबेत् ।
आपः पुनन्तु मध्याह्ने ततश्चाऽऽचमनं चरेत् " ॥

उक्तं चाऽऽग्नेये—" आपः पुनन्तु मन्त्रेण आपो हि ष्ठेतिमन्त्रतः ।
प्रक्षिपेच्चाञ्जलिं सम्यगुदु त्यं चित्रमित्यपि ॥
चक्षुर्देवहितं सम्यग्घंसः शुचिषदित्यपि ।
एतज्जपेदूर्ध्वबाहुः सूर्यं पश्यन्समाहितः ॥
गायत्र्या तु यथाशक्ति उपस्थाय दिवाकरम् " इति ॥

तत्र गायत्र्या हंसमन्त्रेण चोपस्थाने सूर्यदिवाकरशब्दाभ्यां हरिरेवोच्यते । अतस्तदुपस्थाने विनियुक्तस्योदु त्यमित्यादेः सूक्तस्य हरिविषयत्वम् । वाक्यरूपलिङ्गाच्च ।

तदुक्तम्—" तद्यो हंसोऽसौ योऽसौ सोऽहम् " इति ॥

## इति श्रीसंध्यात्रयोपयुक्तमन्त्राणां सायणाचार्यमतानुसारेण श्रीमध्वाचार्यकृतं भाष्यं समाप्तिमगमत् ।

---

ॐ तत्सद्ब्रह्मणे नमः।

श्रीकृष्णपण्डितविरचितं

# तैत्तिरीयसंध्याभाष्यम्।

---

## प्रथमो गुच्छः।

यस्मिन्दर्पणबिम्बजृम्भितपुरीसंदर्भतुल्यं जगद्भातं
यत्परसंविदो यत इदं रूप्यादिवल्लीयते॥
यस्याज्ञानविजृम्भिता परभिदा वारीन्दुभेदादिवत्तं
भूमानमुपास्महे हृदि सदा वामार्धजानिं शिवम्॥ १॥
पूर्णानन्दस्वरूपाय दक्षिणामूर्तये नमः।
प्राज्ञान्प्राज्ञान्करोमीति दीक्षिताय स्वचिन्तया॥ २॥
मुकुन्दाश्रमयोगीन्द्रपादपङ्कजमाश्रये।
तत्संदर्शनमात्रेण प्रायत्यं जायते नृणाम्॥ ३॥
श्रीमत्कटाक्षेक्षणवीक्षितानां वाणी सुत्राणी रसनाञ्चलेऽचला।
प्रवर्तते तान्प्रणमामि नित्यं श्रीकृष्णविद्वन्मणिदेशिकेन्द्रान्॥ ४॥
अरुन्धतीसव्रतभाग्यशालिनी लक्ष्मीरभून्मे जननी जगन्नुता।
श्रीरामभट्टस्तु पिताऽमितागमस्तावद्य वन्दामि सदेष्टसिद्धये॥ ५॥
श्रीमद्राघवदैवज्ञवंश्यः श्रीकृष्णपण्डितः।
प्रकाशयाम्यहं स्पष्टं संध्यावन्दनपद्धतिम्॥ ६॥
भाष्याणि वेदस्य विलोक्य निर्मिता विद्वत्प्रिया निर्णयकल्पवल्ल्यसौ।
गम्भीरवंशाभिपदानुगुम्फिता लब्धागमश्रेणिशुशुत्सया मया॥ ७॥

इह खलु सकलसत्कर्मपरिगणनायामादितः परिगणनार्हस्य संध्यावन्दनकलापस्य स्वरूपविशेषजिज्ञासा यथाकथंचिद्विगुणाऽपि 'श्रेयान्स्वधर्मो विगुणः' इति भगवदुपदेशात्स्वधर्मत्वेन श्रेयसीति हृदि निधाय निरन्तरशुश्रूषापरितोषितसदाचार्यमुखकमलोदीरितसिद्धान्तसागरान्निर्गतमतिरहस्यमाकलय्य यथायोगं प्रकाश्यते। तत्र तावत्संध्यावन्दनं नित्यम्। 'अहरहः संध्यामुपासीत' इतिवीप्सावशात्। अर्धमासेऽर्धमासे प्रवृज्यते वसन्ते वसन्ते ज्योतिषा यजेतेत्यादौ तथा दर्शनात्। ननु युक्तं तत्र नित्यत्वम्। यथाकालमकरणे प्रायश्चित्तविधानात्, आ तृतीयात्पुरुषात्सोमपानाभावे दौर्ब्राह्मण्यश्रवणाच्च, अनाहिताग्निता स्तेय-

मित्युपपातकेषु अनाहिताग्नितायाः पाठाच्च। नैवं प्रकृते तादृशवचांसि सन्ति येन संध्यावन्दनं नित्यं भवेदिति। उच्यते—प्रकृते न तथाविधानि वचनानि सन्तीति वदता वक्तव्यम्, किं संध्यावन्दनकर्मप्रधानभूतगायत्र्युपदेशस्य यथाकालमकरणे प्रायश्चित्ताभावश्चोद्यत आहोस्विद्यथाकालं संध्याकर्मानुष्ठानस्याकरणे प्रायश्चित्ताभावः। नाऽऽद्यः। सावित्र्या अपि यथाकालमनुपदेशे गुरुतरप्रत्यवायश्रवणात्। तथाऽऽह भगवानापस्तम्बमुनिः—'अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं ततः संवत्सरमुदकोपस्पर्शनम्' इति। उक्तं चाऽऽश्वलायनमुनिचरणैः—'अत ऊर्ध्वं पतितसावित्रीका भवन्ति नैनानुपनयेन्न याजयेन्नाध्यापयेन्नैभिर्व्यवहरेयुः' इति। न द्वितीयः। संध्याकरणेऽपि बहुप्रत्यवायश्रवणात्। तथाहि। गोभिलः—

'संध्या येन न विज्ञाता संध्या येनानुपासिता।
जीवमानो भवेच्छूद्रो मृतः श्वानोऽभिजायते' इति॥

विष्णुपुराणेऽपि—

'उपतिष्ठन्ति ये संध्यां ये न पूर्वां न पश्चिमाम्।
व्रजन्ति ते दुरात्मानस्तामिस्रं नरकं नृप'॥

कूर्मपुराणेऽपि—

'योऽन्यत्र कुरुते यत्नं धर्मकार्ये द्विजोत्तमः।
विहाय संध्याप्रणतिं स याति नरकायुतम्'॥

दक्षः—'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु।
यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत्'॥

स्मृत्यन्तरेऽपि—'यः संध्यां कालतः प्राप्तामालस्यादतिवर्तते।
सूर्यहत्यामवाप्नोति उलूकत्वमियात्तथा॥
सायं प्रातस्तथा संध्यां ये विप्रा नह्युपासते।
तानेव धार्मिको राजा शूद्रकर्मसु योजयेत्'॥

शौनकः—'संध्यातिक्रमणं यस्य सप्तरात्रमविच्युतम्।
उन्मत्तदोषयुक्तो वा पुनः संस्कारमर्हति'॥

अविच्युतमविच्छिन्नमित्यर्थः। तस्मात्संध्यावन्दनमकरणे प्रत्यवायबाहुल्यश्रवणान्नित्यमिति सिद्धम्। तच्चानुष्ठानमर्थावबोधपूर्वकमाचरणीयं तथा सति महत्फलं भवति नेतरथा। अत एव च्छान्दोग्ये श्रूयते—'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति। विद्या सम्यगर्थज्ञानम्। श्रद्धाऽऽस्तिक्यबुद्धिः। अर्थज्ञाने सति समग्रं फलं भवतीत्याशयेन

( अर्थज्ञानस्याऽऽवश्यकता )
ीर्यवत्तरमित्युक्तम् । तदेवेति विशेष्यसंगत्यैवकारसामर्थ्यादविद्वत्कृतमनुष्ठान-
मतथाभूतमिति च गम्यते । तथा निरुक्तेऽपि—

' स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ' इति ॥

स्मृत्यन्तरेऽपि—' यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ' ॥

लघुव्यासोऽपि—' वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चापि यत् ।
अजानतोऽर्थं तत्सर्वं तुषाणां कण्डनं यथा ॥

कण्डनमवहननम् । तुषावहननवद्वृथा प्रयास इत्यर्थः ।

यथा पशुर्भारहारी न तस्य भजते फलम् ॥
द्विजस्तदर्थानभिज्ञो न वेदफलमश्नुते ।

वैदिककर्मफलभाङ्न भवतीत्यर्थः । अत एव व्यासः—

' ज्ञात्वा ज्ञात्वा च कर्माणि जनो यो योऽनुतिष्ठति ।
विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो भवेत् ' ॥

अत एव तेषां पूजनमपि न कार्यमिति स एवाऽऽह—

' पाठमात्ररतान्वेदे द्विजातींश्चार्थवर्जितान् ।
पशूनिव न तान्प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ' ॥

अतोऽर्थज्ञानमावश्यकमित्यभिप्रायः । लघुव्यासः—

' श्रुतहीनमधीतं यन्नेह नामुत्र तद्भवेत् ।
श्रुतं च केवलमपि समुत्थानाय कल्पते ' ॥

श्रुतमर्थज्ञानमुभयोः समुच्चयेन भवितव्यमित्यभिप्रायः । तदाह स एव—

' ज्ञानं कर्म च संयुक्तं मुक्त्यर्थं कथितं यथा ।
अधीतं श्रुतसंयुक्तं तत्र श्रेष्ठं न केवलम् ' ॥

अर्थज्ञानसंपन्नस्य फलमाह मनुः—

' वेदशास्त्रार्थतत्त्वज्ञो यत्र यत्राऽऽश्रमे वसेत् ।
इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते ' ॥

हारीतोऽपि—' मन्त्रार्थज्ञो जपञ्जुह्वंस्तथैवाध्यापयन्द्विजः ।
अधीत्य यत्किंचिदपि वेदार्थाधिगमे रतः ॥
ब्रह्मलोकमवाप्नोति धर्मानुष्ठानतो द्विजः ' ।

यत्किंचिदिति मन्त्रभागमात्रमपीत्यर्थः। वेदार्थापरिज्ञाने दोषमाह—

'न वेदपाठमात्रेण संतुष्टः स्याद्द्विजोत्तमः।
पाठमात्रावसायी तु पङ्के गौरिव सीदति॥
योऽधीत्य विधिवद्विप्रो न वेदार्थं विचारयेत्।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते'॥

तस्मादकरणे प्रत्यवायश्रवणात्करणे चाभ्युदयसंभवादर्थज्ञानमावश्यकमिति सिद्धम्। किं च मन्त्रार्थपरिज्ञानपूर्वकोपदेशसिद्ध्यर्थमुपनेतुर्विद्वत्तामाहाऽऽपस्तम्बो मुनिः सामयाचारिकेषु—'तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति ब्राह्मणम्' इति। अथ वृत्तिकारः—विद्वानेवोपनेताऽभिगम्यत इति विधातुमविदुषो निन्दामाह—यथा कश्चित्तमसः सकाशात्तम एव प्रविष्टः किंचिन्न जानाति एवमेष यमविद्वानुपनयते। यश्चाविद्वानित्यपेक्षते यश्च स्वयमविद्वानुपनयते सोऽपि तमस एव तमः प्रविशतीति। तस्मादर्थज्ञानं नित्यमित्याचार्याभिप्रायः। किंच मन्त्रार्थज्ञानासिद्ध्यर्थमेवार्थी समर्थो विद्वानिति यागाधिकारविशेषणकोटौ विद्वत्पदं निवेशितमन्यथा तस्य वैफल्यापातात्। ननु 'पत्न्यवेक्षितमाज्यं भवति विष्णुक्रमान्क्रमते' इत्यादिष्वन्धायाः पङ्ग्वादेश्च तदसंभवेऽपि न नित्यकर्मणि क्षतिस्तद्वदविदुषोऽपि यागाधिकारेऽपि न क्षतिरिति चेन्मैवम्। पङ्ग्वादेरङ्गवैगुण्यादिना विष्णुक्रमणमात्रानुष्ठानासमर्थत्वेऽपि तदितरयाजमानकलापस्य मन्त्रार्थपरिज्ञानपूर्वकमनुष्ठातुं शक्यत्वान्न कश्चिद्दोष इति तत्र युक्तमुत्पश्यामः। प्रकृते तु तस्य गाढाज्ञानप्रविष्टस्य मूकतुल्यतया कुत्रापि संकल्पादियाजमानकर्मणि यथार्थानुष्ठानासमर्थत्वेन तत्कृतकर्मणस्तुषावहननन्यायेन वैफल्यात्। पङ्ग्वादेः सामर्थ्याभावेऽपि यागाधिकारोऽस्तीति तन्न्यायेन मूढस्यापि तदधिकारायोगाच्च। न हि 'यज्ञोपवीती नित्योदकः संध्यामुपासीत' इति विधीयमानं संध्यावन्दनमशक्तस्यास्नातस्याप्यस्तीति तन्न्यायेनायज्ञोपवीतिनोऽपि तदनुष्ठानं दृश्यते। न च 'विशिखोऽनुपवीती च यत्करोति न तत्कृतम्' इति वचनादयज्ञोपवीतिनस्तदनुष्ठानमनुचितमिति वाच्यम्। तथा सत्यर्थज्ञानावश्यकताप्रतिपादकपूर्वोक्तबहुवचनपीडाभिया मूढस्यापि नाधिकारोऽस्तीति न किमर्थं ब्रूयाः। तस्मान्मूढस्यापि गरीयसा प्रयत्नेन विदितपदपदार्थसंमतिकस्यैव तदधिकारः। अन्यथा देवतोद्देशत्यागादिमात्रज्ञानस्याप्यभावेन तत्कृतं कर्म विफलं स्यात्। अविधिना कृतमकृतमिति सिद्धान्तात्। अत एव 'य एवं वेद। य एवं विद्वान्यजते। यस्यैवं विदुषोऽग्निहोत्रं जुह्वति। य उ चैनदेवं वेद। य एवं विद्वांश्चातुर्मास्यैर्यजते'

ति प्रतिकर्म विद्वत्संकीर्तनं दृश्यते। तदन्यथोन्मत्तप्रलापवदनर्थकं स्यात्। ह च स्वाध्यायोऽध्येतव्य इत्यध्ययनविधेराफलवदर्थावबोधाद्व्यापारमङ्गीकुर्णैर्भट्टपादैरपि मन्त्रार्थपरिज्ञानमावश्यकमिति बहुधा प्रतिपादितम्। ननु लवदर्थावबोधस्यान्वयव्यतिरेकाभ्यां लाभान्न तदर्थमध्ययनं विधेयमिति ान्न। अध्ययनेनैवार्थमवगम्य यागादिकमनुष्ठितं चेत्क्रतुफलभावनासिद्धिरि- त नियमार्थं तद्विधानात्। नन्वध्ययनविधेरनारभ्याधीततया क्रतुसंस्पर्शनाभा- ान्न क्रत्वर्थत्वमिति चेन्न। स्वाध्यायस्यार्थप्रतिपादनसामर्थ्यरूपलिङ्गेन यागा- प्रवेशे तद्द्वाराऽध्ययनस्य यागसंस्पर्शसंभवात्। यथा 'यस्य पर्णमयी जुहू- र्भवति' इत्यनारभ्याधीतपर्णताया अव्यभिचरितक्रतुसंबन्धिजुहूद्वारा यागान्व- ात्पर्णशब्दार्थपलाशरूपप्रकृतिद्रव्यनियमविधिपरत्वं तद्वचनस्य दृष्टं तद्व- देति संक्षेपः। *यद्यपि विवरणकारमतेऽध्ययनविधेरक्षरावाप्तिद्वारा[तदर्थ]- र्यवसानाङ्गीकारान्न काऽपि क्षतिः। तस्मादर्थज्ञानमावश्यकमिति सिद्धम्। स्य निगमनिरुक्तव्याकरणादिसाध्यत्वेन तत्रात्यन्तालसानां फलवद- ज्ञानलाभाय स्वबुद्धिपरीक्षार्थं च तत्परमोपायभूतनवीनग्रन्थारम्भ ति दुरभिमानदुष्टजनसमुत्थापितैतद्वैयर्थ्यशङ्का नावतरति। ननु संध्यावन्दनं कथंभूतेन कर्तव्यम्। उच्यते—'यज्ञोपवीती नित्योदकः संध्यामुपासीत' इति आश्वलायनिके दर्शनाद्यज्ञोपवीतिना कृतस्नानेन मार्जनादिकं कुर्वता प्रदक्षिणं संध्यावन्दनं कर्तव्यम्। तदुक्तमापस्तम्बेन श्रौतपरिभाषायाम् 'यज्ञोपवीती प्रदक्षिणं दैवानि कर्माणि करोति' इति। स्मार्तपरिभाषायामपि—यज्ञोपवी- तिना प्रदक्षिणमपि (मिति)। नित्योदकः स्मृत्युक्तोदकः। तेन मार्जनादिकमपि सिद्धमिति नारायणवृत्तिकारः। तत्पदेनैव स्नानस्यापि ग्रहणम्। शक्तिविषये स्नातस्यैव तदधिकारात्। शक्तविषये 'न मुहूर्तमप्यप्रयतः स्यात्' इति सामया- चारिकेषु तथा दर्शनात्। ननु संध्याकाले न स्नानमावश्यकं तत्पूर्वभावित्व- नियमाभावात्। अत एव संध्या स्नानमिति विपरीतपाठः पराशरस्मृतौ दृश्यत इति चेन्न। 'अग्निहोत्रं जुहोति यवागूं पचति' इतिवत्पाठव्यत्यासेऽप्यर्थक्रम- स्वीकारात्। अत एव—

'अस्नातो नाऽऽचरेत्कर्म जपहोमादि किंचन।
स्नात्वाऽधिकारी भवति दैवे पित्र्ये च कर्मणि॥
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः।
स्रवत्येव दिवा नक्तं प्रातःस्नानं विशोधनम्'

---

* यद्यपीत्यधिकम् एतद्वाक्ये किंचित्त्रुटितं वेति बोध्यम्।

इति स्मृतिषु संध्यावन्दनात्पूर्वं स्नानं कार्यमिति बहुधा प्रतिपाद्यते। तस्मात्पूर्वं स्नानं कर्तव्यम्। ततः संध्यावन्दनं कर्तव्यमिति सर्वं सुस्थम्। ननु यज्ञोपवीतिना कर्तव्यमित्युक्तं तदनुपपन्नम्, उपनयनकाले तस्य गृह्यकारैरनुक्तत्वादिति चेत्, सत्यम्। तथाऽपि यज्ञोपवीतधारणमावश्यकम्। 'अथ कथम-यज्ञोपवीती ब्राह्मणः' इति श्रुतौ यज्ञोपवीताभावे ब्राह्मण्याभावस्योक्तत्वात्। गृह्यकारैरपि तत्र तत्र कर्मणि यज्ञोपवीतधारणमुक्तम्। 'यज्ञोपवीतशौचे च नित्ये' इति परिभाषायामपि नित्यत्वमुक्तम्। 'यज्ञोपवीत्याचम्ये' इत्याश्वलायनिक उक्तम्। आपस्तम्बसूत्रेऽपि—'उपासने गुरूणां वृद्धानामतिथीनां च होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात्' इति। तैत्तिरीयकेऽपि 'सह वै देवानां चासुराणाम्' इत्यत्र 'यत्किंच ब्राह्मणो यज्ञोपवीत्यधीते यजत एव तत्तस्माद्यज्ञोपवीत्येवाधीयीत याजयेत वा' इति सम्यगुक्तम्। तस्माच्छ्रुतिस्मृतिगृह्यसिद्धत्वाद्यज्ञोपवीतधारणमावश्यकमिति सिद्धम्। उपनयनप्रकरणेऽपि तद्व्याख्यानावसरे सुदर्शनाचार्यैरुपासने गुरूणामिति सूत्रेण विहितं यज्ञोपवीतं प्राप्तमिति व्याख्यातम्। तत्र भृगुः—

'सदोपवीतिना भाव्यं सदा बद्धशिखेन च।
विशिखोऽनुपवीती च यत्करोति न तत्कृतम्' इति।

संध्यात्रयमध्ये सायंसंध्याया एव प्राथम्यम्। तथाहि—उपनयनकाले माध्याह्निकसंध्याया अवकाशेऽपि सायंसंध्याया उपक्रमविधानात्सैव प्रथमेति गम्यते। अत्र गौतमः—

संध्यात्रयं न कर्तव्यं यावन्मौञ्जी न बध्यते।
संध्यात्रयं तु कर्तव्यं सायमादि ततः परम्॥

ततः परमुपनयनानन्तरमित्यर्थः।

गायत्रीं [तु] गुरोर्लब्ध्वा मन्त्रान्ध्यायन्यथोदितान्।
अभ्यस्योपासयेत्संध्यां सायमादि यथाक्रमम्।

वसिष्ठोऽपि—'गायत्रीं गुरुणा दिष्टां तिष्ठन्नासूर्यमभ्यसेत्।
सूर्येऽस्तशिखरं प्राप्ते सायंसंध्यामुपक्रमेत्' इति।

शौनकोऽपि—'उपनीतौ कृतायां तु सायंसंध्यामुपक्रमेत्।
ब्रह्मयज्ञं प्रकुर्वीत मध्याह्ने तु परेऽहनि।
उपाकरणपर्यन्तं गायत्र्या ब्रह्मयज्ञकम्।
कुर्यान्माध्याह्निकीं संध्यां ततः स्मृत्युक्तमार्गतः।

तत उपनयनानन्तरं परेऽहनि मध्याह्नकाल इत्यर्थः। आश्वलायनशाखि

ामप्ययमेव पन्थाः । 'तिष्ठेदहःशेषम्' इति गृह्यकारेणास्तंगमनपर्यन्तं ब्रह्मचा-
्ण उपवेशस्य निषिद्धत्वात् । अनुपविशत आचमनसंध्याद्यनधिकारः
तिष्ठन्नाऽऽचामेत्' इति निषेधात् । तस्मान्माध्याह्निकसंध्याकरणमुपनयनकाले
ोपपद्यते । ननु तदर्थमुपवेशनं भविष्यतीति चेन्न । तथा सत्यहःशेषमित्यत्य-
ासंयोगे द्वितीयाश्रुतेः पीडा स्यात् । न चेष्टापत्तिः । यावता हीदं
थममुपात्तगायत्रीमन्त्रस्य शुद्ध्यर्थं स्वाधीनतालाभार्थं च तिष्ठेदिति ब्रह्म-
ारिणः स्थानं विहितं तस्य भ्रंशे मन्त्रस्यैव नियमविलोपाद्भ्रंशः स्यात् । 'न
ायो नियमं विना' इति वचनात् । तथा सति सावित्रीपातित्यमेव स्यादिति
लोच्छेदी पाण्डित्यप्रकर्षः । गृह्यकारेणापि सायंसंध्याप्रभृत्येव संध्याविधानं
ृतम् 'यज्ञोपवीती नित्योदकः संध्यामुपासीत वाग्यतः सायमासीनः' इत्यादि ।
स्मात्सायंसंध्याप्रभृत्येव संध्याकालो निर्णीतः । अथ संध्याकालो विचार्यते ।
त्र मुख्यकाल उक्तश्छान्दोग्ये 'संधौ संध्यामुपासीताऽऽ ज्योतिषो दर्शना-
ंधिः' इति । अस्यार्थः—अत्र ज्योतिष्पदं सूर्यनक्षत्रवाचकम् । तथा चाऽऽ
योतिषो दर्शनादर्धास्तमितसूर्यदर्शनकालमारभ्य नक्षत्रोदयपर्यन्तं यः कालः
संधिः । तत्र सायंसंध्यामुपासीत विदधीत । तदुक्तम्—

'अर्धास्तमितकालाद्यः संधिरातारकोदयात् ।
तत्र संध्यामुपासीत सायंकाले समाहितः' इति ॥
उदयात्प्राक्तनी संध्या घटिकात्रयमुच्यते ।
सायंसंध्या त्रिघटिका अस्तादुपरि भास्वतः' ॥

सकलसूर्यबिम्बास्तमयादूर्ध्वं नक्षत्रोदयात्पूर्वं सायंसंधिकालः । कृत्स्ननक्षत्रा-
ंगमनादूर्ध्वं सूर्योदयात्प्राक्प्रातःसंधिकालस्तत्र संध्यामुपासीतेति श्लोकार्थः ।
यं संध्याद्वयस्य मुख्यः कालः । नन्वेवं चेत्संध्यावन्दनं कथमाचरणीयमेता-
शमुख्यकालस्यातिदुर्लभत्वात् । उच्यते—अस्यैव कालस्योत्तमादिभेदेन
ृतिषु कीर्तितत्वेनोत्तमकाले तदनुष्ठानालाभेऽपि मध्यमादिकाले तदनुष्ठान-
भवात् । तथा हि—

'उत्तमा सूर्यसहिता मध्याऽनुदिततारका ।
अधमा तारकोपेता सायंसंध्या त्रिधा मता' ॥

गौतमः—'उत्तमा तारकोपेता मध्यमा लुप्ततारका ।
अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता' ॥

एवंभूतोऽपि मुख्यकाल एव । तस्मिंस्त्रिविधे काले यस्तु संध्यां नानुति-
ष्ठति स संपूर्णब्राह्मणो न भवति । तथाच शातातपः—

' अनागतां तु यः पूर्वां सादित्यां चैव पश्चिमाम् ।
नोपासीत द्विजः संध्यां स सर्वोऽब्राह्मणः स्मृतः ' इति ॥

अब्राह्मणः संपूर्णब्राह्मणो न भवतीत्यर्थः ।

द्वादशाहमनग्निस्तु संध्याकालविपर्ययः ॥
पठिताखिलवेदोऽपि शूद्र एव न संशयः ॥

यस्त्वेतस्मिन्काले संध्यामुपास्ते स संपूर्णब्राह्मण इत्यर्थादुक्तं भवति। गौतमः—

' काले तु वन्दिता संध्या स्वर्गमोक्षप्रदायिनी ।
अकाले वन्दिता संध्या सा च संध्या (वन्ध्या) वधूरिव ' ॥

अथ संध्याशब्दार्थो विचार्यते—संध्यामुपासीतेत्यत्र संध्या नाम चिच्छक्तिरूपा देवता तामुपासीत ध्यायेत् । तां ध्यायन्नाचमनादारभ्याभिवादनान्तं कर्म कुर्यात् । सा देवता स्पष्टीकृता—

' या संध्या सा जगत्सूतिर्मायातीता हि निष्कला ।
ईश्वरी केवला शक्तिस्तत्त्वत्रयसमुद्भवा ॥
ध्यात्वाऽर्कमण्डलगतां सावित्रीं वै जपेद्बुधः ' इति ॥

अनेनार्कबिम्बाभिव्यक्तादित्यशब्दवाच्या परब्रह्मरूपा चिच्छक्तिरेव संध्यादेवतेत्युक्तं भवति । ध्यात्वा ध्यायन्नित्यर्थः । सा, ऋग्गायत्री । नन्विदं विरुद्धम् । संध्यापदं न चिच्छक्तिपरं, परं तु कर्मपरमेव । संध्या स्नानमिति पराशरेण तत्परत्वेन कीर्तितत्वात् । सत्यम् । संध्यापदस्य मुख्यवृत्त्या चिच्छक्तिपरत्वेऽपि संधौ भवा संध्येति व्युत्पत्त्या क्रियापरत्वसंभवात् । अत एव व्यासः—

' उपास्ते संधिवेलायां निशाया दिवसस्य च ।
तामेव संध्यां तस्मात्तु प्रवदन्ति मनीषिणः ' इति ॥

तां क्रियां विदधाति योगयाज्ञवल्क्यः—

' संधौ संध्यामुपासीत नास्तगे नोद्गते रवौ ' इति ।

तां क्रियामादित्याख्यां चिच्छक्तिरूपां देवतां ध्यायन्कुर्यादिति फक्किकार्थः। अत्र केचित्—संधावुपास्यदेवता संध्या तयोपलक्षितां क्रियामादाय पर्यवस्यत्संध्यापदं क्रियापरमित्याहुः । तन्न । संधौ भवा संध्येति संध्यापदस्य साक्षात्क्रियापरत्वसंभवे परम्परया तत्कल्पनाया अन्याय्यत्वात् । उपासीतेत्युपासना विहिततया कर्तृपरतन्त्राभिध्यानरूपा क्रियैव न तु ज्ञानम् । तस्

प्रमाणपरतन्त्रत्वेन पुंस्परतन्त्रत्वायोगात् । तथा च श्रुतिः—'उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद' इति । अस्यायमर्थो भाष्यकारोक्तः—वक्ष्यमाणप्राणायामादि कर्म कुर्वन्संध्याशब्दवाच्यमादित्यं ब्रह्मेति ध्यायन्नैहिकामुष्मिकं सकलं भद्रमश्नुते । य एवमुक्तध्यानेन शुद्धान्तःकरणो ब्रह्म साक्षात्कुरुते स पूर्वमपि ब्रह्मैव सन्नज्ञानाज्जीवत्वं प्राप्तस्तत्साक्षात्कारेणाज्ञानापगमे ब्रह्मैव प्राप्नोतीति । व्यासः—

'तदेवं प्रतिपद्येत सावित्रीं ब्रह्मणा सह ।
सोऽहमस्मीत्युपासीत विधिना येन केनचित्' इति ॥

आदित्यरूपा चिच्छक्तिरेव गायत्र्याख्या च भवति । अत एव जपकाले गायत्रीध्यानं विहितम्—

'गायत्रीं चिन्तयेद्यस्तु हृत्पद्मे समुपस्थिताम् ।
धर्माधर्मविनिर्मुक्तः स याति परमां गतिम्' ॥

श्रुतावादित्यध्यानमुक्तम् । वचने तु गायत्रीध्यानम् । तत्राऽऽदित्यरूपचिच्छक्तेर्गायत्रीशब्दवाच्यत्वानङ्गीकारे जपकाल एव गायत्र्यादित्ययोर्ध्यानावाप्तिः । न चेष्टापत्तिः । एकस्य कर्तुरेककालीनप्रधानकर्मद्वयकरणायोगात् । तस्मादादित्यरूपचिच्छक्तेरेव गायत्रीशब्दवाच्यत्वं ब्रह्मचैतन्यस्यैव गायत्रीमन्त्रप्रतिपाद्यत्वाच्चिच्छक्तिरूपमादित्यरूपं गायत्रीरूपं च ब्रह्म संध्यादेवतेत्यवगन्तव्यम् । अत्रेदं विचार्यते । अर्घ्यप्रक्षेपणं गायत्रीजपः सूर्योपस्थानं चेति त्रितयं संध्याकर्मणि समप्रधानम् । अन्यत्स्मृत्युक्तमार्जनादिकं तदङ्गं तदुपकारकमिति यावत् । अपरार्के शाखान्तरे—ॐकारव्याहृतिपूर्वां गायत्रीं ब्राह्मणो जपेत् । त्रिष्टुभं राजन्यो जगतीं वैश्यः । सर्वे गायत्रीमिति जपमात्रविधानाज्जप एव प्रधानमिति तत्रावगम्यते । ओमित्येकाक्षरं ब्रह्मेत्यादिहृदयपठनं प्राणायामन्यासध्यानादिकं गायत्रीजपाङ्गम् । एतेषु त्रिष्वप्यर्घ्यप्रक्षेपणं बलवत्प्रधानम् । गायत्र्याऽभिमन्त्रिता अप ऊर्ध्वं विक्षिपन्तीत्यत्र तावन्मात्रस्यैव प्राधान्येन विधानात् । गायत्रीजपोपस्थानप्रतिषेधपूर्वकमाशौचेऽप्यर्घ्यप्रक्षेपणमात्रविधानाच्च । तदुक्तं स्मृत्यन्तरे—स्वाध्यायजपहोमादि ना(चाऽऽ)शौचे वर्जयेत्सदेति । जपो गायत्रीजपः । तस्मिन्कालेऽर्घ्यमात्रमेव कर्तव्यमित्याह पैठीनसिः—'आशौचेऽप्यपामञ्जलीन्प्रक्षिप्य सूर्यं ध्यायन्नमस्कुर्यात्' इति । सूर्यं ध्यायन्नञ्जलीन्प्रक्षिपेदित्यन्वयः । स्मृतिकारैरेतत्सर्वं विचार्याऽऽग्नेयादियागत्रयात्प्रयाजादिवदेतेषां त्रयाणामनुष्ठानमावश्यकमित्युक्तम् । दैवान्मानषाद्वा

कदाचित्त्रितयानुष्ठानासंभवेऽप्येकानुष्ठानेनैव संध्योपासनापूर्वं सिध्यति। असोमयाजिनो ब्राह्मणस्याग्नीषोमीययागानुष्ठानाभावेऽपि तदितरयागानुष्ठानेनैव पौर्णमासेष्ट्यपूर्ववदिति प्रयोजनमनुसंधेयम्।

अथ संध्याकाललोपप्रायश्चित्तम्—

संध्याकाले त्वतिक्रान्ते स्नात्वाऽऽचम्य यथाविधि।
जपेद्दशशतं देवीं ततः संध्यां समाचरेत्॥

जमदग्निः—एकाहं समतिक्रम्य प्रमादादकृतं यदि।
अहोरात्रोषितो भूत्वा गायत्र्याश्चायुतं जपेत्।
राष्ट्रभङ्गे नृपक्रोधे रोगार्ते सूतकेऽपि च।
संध्यावन्दनविच्छित्तिर्न दोषाय कदाचन॥

तथाविधकाले यावदनुष्ठानासंभवेऽपि मनसा मन्त्रोच्चारणे तत्सिद्धिः। न तु सर्वात्मना लोपः, नित्यत्वादिति तात्पर्यार्थः। इदं चार्घ्यदानकाले सम्यङ्निरूप्यते। ननु विद्यासक्तानां संध्यावन्दनकाललोपो भवति तत्र का वार्ता। कुशलैव।

देवाग्निद्विजविद्यानां कार्ये महति संस्थिते।
संध्याहीने न दोषोऽस्ति ये च सत्कर्मसाधनाः॥

तस्माद्यथाकालातिक्रमणेऽपि विद्यासक्तानां न दोष इति स्थितम्।

'सायं प्रातर्न दोषोऽस्ति संध्याकालोऽतिपद्यते।
मुख्यकल्पोऽनुकल्पश्च सर्वस्मिन्कर्मणि स्थितः'

इति वृद्धमनुवचनादधमगौणकालो वेदितव्यः। मध्यमगौणकालोऽस्ति स्मृत्यन्तरे कथितः—

'चतस्रो घटिकाः सायं गौणकालोऽस्ति मध्यमः।
प्रातःकालेऽप्येवमेव संध्याकालो मुनीरितः' इति॥

षड्घटिकात्मकः कालः प्रातःशब्दार्थः। मुहूर्तत्रितयं प्रातरिति वचनात्। तत्र चतस्रो घटिकाः सायं संध्यायां गौणमध्यमकाल इत्यर्थः। प्रदोषकालोऽपि तावानेव।

'त्रिमुहूर्तः प्रदोषः स्याद्भानावस्तं गते सति' इति वचनात्।

तत्रापि पूर्ववत्। उत्तमगौणकालस्तु संग्रहकारेणोक्तः—

सायंकाले त्रिघटिका अस्तादुपरि भास्वतः।
प्रातःकाले द्विघटिका तत्र संध्यां समाचरेत्॥

गोभिलः—मुख्यकाले यदावश्यं कर्म कर्तुं न शक्यते ।
गौणकालेऽपि कर्तव्यं गौणोऽप्यत्रेदृशो मतः ॥

अत्राऽऽपदीदृशो मुख्य एवेति संमतः । गौणकालेऽप्यतिक्रान्त आसायं प्रातःसंध्यां कुर्यात् । तावत्पर्यन्तं सूर्यस्य रक्षसां च युद्धप्रवृत्तेः । सूर्यस्य युद्धबाधानिवृत्त्यर्थत्वात्तत्संध्योपासनस्य । 'तस्मादुत्तिष्ठन्तꣳ ह वा तानि रक्षाꣳस्यादित्यं योधयन्ति यावदस्तमयात्' इति श्रुतेः । तत्रानुष्ठानकाले प्रायश्चित्तपूर्वकमेवानुष्ठानं कर्तव्यम् । तत्प्रकारस्तु स्मृत्यन्तरे—

प्राणायामत्रयं प्रातर्द्विगुणं संगवे स्मृतम् ।
मध्याह्ने त्रिगुणं प्रोक्तमपराह्णे तु षड्गुणम् ॥
सायाह्ने द्वादशगुणं सूर्यहत्यां व्यपोहति ।

अथ संध्यात्रयस्य विशेषेण कालातिक्रमणप्रायश्चित्तमुच्यते । संध्याया द्वौ कालौ निर्णीतावधस्तात् । मुख्यगौणभेदात् । तत्र मुख्यकालेऽतिक्रान्ते गौणकाले प्राप्ते चेदनुष्ठानं वक्ष्यमाणप्रायश्चित्तपूर्वकं कार्यम् । तच्च प्रायश्चित्तं द्विविधम् । गायत्रीपूर्वकमर्घ्यप्रक्षेपणात्मकमेकम् । प्राणायामात्मकमपरम् । तत्रार्घ्यप्रक्षेपणात्मकमाह व्यासः—

प्रणवव्याहृतियुतां गायत्रीं शिरसा सह ।
उच्चार्य दत्त्वाऽर्घ्यमादौ संध्याकर्म समाचरेत् ॥

ग्रन्थान्तरे—

गायत्रीं शिरसा सार्धमुक्त्वा व्याहृतिभिः सह ।
कालातीतविशुद्ध्यर्थं दत्त्वा संध्यां समाचरेत् ॥

अर्घ्यमिति शेषः । इदं प्रायश्चित्तं संध्यात्रयेऽपि समम् । तदानीमेकं प्राणायामं कृत्वा मुख्यकालातिक्रमदोषपरिहारार्थमर्घ्यप्रक्षेपणात्मकं प्रायश्चित्तं करिष्य इति संकल्प्य प्रायश्चित्तार्घ्यं दत्त्वा ततः संध्यां समाचरेत् ।

चतुरर्घ्यं तु गायत्र्या दत्त्वा संध्यां समाचरेत् ।
कालातीतविशुद्ध्यर्थं त्रिसंध्यासु समाहितः ॥

उभयोः प्रायश्चित्तयोः समुच्चयः । एकस्मिन्दोषे श्रूयमाणानि प्रायश्चित्तानि समभ्युच्चीयेरन्निति श्रौते दर्शनात् । न विकल्पः । प्राणायामलक्षणं प्रायश्चित्तमुक्तमधस्तात् । तत्र केचित्प्राणायामत्रयं प्रातरित्यत्र प्रातरिति लिङ्गात्प्रातःकालातिक्रमणप्रायश्चित्ततयैव प्राणायामलक्षणं प्रायश्चित्तं समुच्चिनोति नेतरयोरिति वदन्ति । तन्न । अर्थं वा सिषाधयिषोर्नियमातिक्रमे चान्यस्मिन्निति नियमाति-

क्रमणमात्रे विधीयमानस्य तस्य कर्मविशेषे नियन्तुमशक्यत्वात्। अत एव सुदर्शनाचार्यः प्रायश्चित्तनिरूपणप्रसङ्ग आचमनं भोजनलोपः प्राणायामश्चेति त्रयाणां समुच्चयो न तु विकल्प इति व्याचष्टे। वचनस्थं प्रातरिति पदमनुवादपरमिति न दोषः। ननु संध्यात्रयस्य दिवाभागे दैवान्मानुषाद्वा सर्वथाऽनुष्ठानासंभवे किं कर्तव्यम्। उच्यते—उक्तप्रायश्चित्तपूर्वकं क्रमेण शर्वर्याः प्रथमपादे कुर्यान्न तु व्युत्क्रमेण। तत्र लोकोपकारे—

दिवोदितानि कर्माणि प्रमादादकृतानि वै।
शर्वर्याः प्रथमे पादे तानि कुर्याद्यथाक्रमम्॥

तत्र केचित्—स्वकाले बलवत्यपीति न्यायेन सायंसंध्यामादौ कृत्वा दिवातिपन्नानि कर्माणि कुर्यादिति। अपरे पुनः क्रमेणेति वदन्ति। तदुक्तम्—

कालातीतेषु पूर्वेषु प्राप्तवत्सूत्तरेषु च।
कालातीतानि कृत्वैव विदध्यादुत्तराणि तु॥

शिष्टाचारादाचारो वेदितव्यः। तदुक्तमापस्तम्बेन 'सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं॰ स्वधर्मनिरतानां॰ सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेतैवमुभौ लोकावभिजयति' इति। ननु रात्रौ यामेऽप्यतिक्रान्ते का गतिः। कर्मानुष्ठानलोप एव गतिः। अत्र लोकोपकारे—

'अकाले चेत्कृतं कर्म काले प्राप्ते पुनःक्रिया।
कालातीते तु यत्कुर्यादकृतं तद्विनिर्दिशेत्' इति॥

अस्यार्थः—अकालेऽनागतकाले यदि कर्म कुर्यात्तस्य मुख्यकाले प्राप्ते पुनःक्रिया पुनःकरणं भवेत्। कालातीते तु गौणकालातिपत्तौ तत्कर्म न कुर्यात्किंतूक्तप्रायश्चित्तमेव कुर्यात्। संध्यादिनित्यकर्मानुष्ठानाभावेनैकस्मिन्नहोरात्रे गतेऽपरेद्युरुपोष्य षोडशप्राणायामपूर्वकमष्टोत्तरसहस्रं गायत्रीजपं कुर्यात्। तथा च मनुः—

वेदोदितानां नित्यानां कर्मणां समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चितमभोजनम्॥
संध्यावन्दनहानौ तु नित्यस्नानं विलुप्य च।
होमं च नित्यकं शुद्धे सावित्र्यष्टसहस्रकम्॥

शुद्धेऽपरेद्युरष्टसहस्रकमष्टोत्तरसहस्रकम्। अत्रायं सिद्धान्तः—यदौपासनस्याष्टहोमकालातिपत्तौ चतूरात्रमहूयमानोऽग्निर्लौकिकः संपद्यत इति वचना-

ऽर्ध्वं धार्यमाणेऽप्यग्नावनुगतो मन्थ्य इत्यग्न्युत्पत्तिप्रायश्चित्ते भवतः । तथा सप्तरात्रमविच्युतसंध्यावन्दनाभावे पुनः संस्कारः कार्यस्तदनन्तरमुपेतेन पूर्वप्रकारेण तदनुष्ठानं कार्यम् । अत्र शौनकः—

'संध्यातिक्रमणं यस्य सप्तरात्रमविच्युतम् ।
उन्मत्तदोषयुक्तो वा पुनः संस्कारमर्हति' इति ॥

औपासनहोमस्य बहुकालातिक्रमणेऽष्टभ्यो होमकालेभ्यः पूर्वं प्रत्येकं सर्वप्रायश्चित्तपूर्वकमतीतहोमाः कर्तव्यास्तथा सुदर्शनाचार्यैरुक्तत्वात् । प्रकृते तु संध्यावन्दनस्य बहुकालातिक्रमणे सप्तरात्रात्पूर्वमतीतसंध्यानुष्ठानं प्रायश्चित्तपूर्वकं कार्यमिति वक्तुं न शक्यते । तथाशिष्टाचाराभावात् । स्मृतिकारैरनङ्गीकाराच्च । किं तु यथोक्तप्रायश्चित्तमेव कृत्वा तत्कालोचितानुष्ठानमेव कार्यमिति स्मृतिविदां स्थितिः । इतोऽप्यन्यत्स्मृतिवशाज्ज्ञेयम् । ग्रन्थविस्तरभयान्नेह बहु प्रपञ्चितमिति ।

श्रीकृष्णं जगदेकपण्डितमणिं श्रीरामभट्टारकः
श्रीलक्ष्मीरपि यं जजान तनयं प्रत्यक्प्रबोधोज्ज्वलम् ।
तन्न्यग्रोधसमीपवासिभगवन्मन्त्रानुचिन्ताफले
संध्यावन्दननिर्णये निरगमद्गुच्छोऽयमादिः स्फुटम् ॥

## इति श्रीमद्राघवदैवज्ञवंश्यश्रीकृष्णपण्डितविरचिते तैत्तिरीयसंध्याभाष्ये प्रथमो गुच्छः ॥ १ ॥

---

अथ द्वितीयो गुच्छः ।

---

## अथाऽऽचमनप्रकारः ।

आचमनं त्रिविधं श्रौतं स्मार्तं पौराणं चेति । तत्र प्रत्यक्षश्रुतिचोदितं श्रौतम् । सूत्रोक्तं स्मार्तम् । केशवाद्यैस्त्रिभिः पीत्वेतिवचनोक्तं पौराणम् । तत्राऽऽद्यं तैत्तिरीयारण्ये प्रसिद्धम् । तच्च ब्रह्मयज्ञाङ्गम् । तच्चाऽऽश्वलायनानामपि कर्तव्यम् । द्वितीयं पुनः संध्यादिकर्माङ्गम् । तृतीयं पुनर्निष्ठीवनशौचाद्यमिति विवेकः ।

'संध्यान्ते च तथा पाने स्पृष्टास्पृष्टौ च सर्पणे ।
पौराणाचमनं कुर्यान्नामभिः केशवादिभिः' इति स्मृतिषु दर्शनात् ॥

विशेषेण स्मृ(श्रु)त्याचमनं षट्कर्मचन्द्रिकायामुक्तम्—

देव्याः पादैस्त्रिभिः पीत्वा अब्लिङ्गैर्नवभिः स्पृशेत् ।
सप्तव्याहृतिसंयुक्ता गायत्री त्रिपदा शिरः ॥

शिरोमन्त्रो द्विधा कृतः । एतेनास्याऽऽचमनस्य चतुर्विंशतिर्मन्त्रा भवन्ति । तेषां विनियोगः केशवादीनामिव द्रष्टव्यः । इदं श्रौताचमनं दर्शपूर्णमासाङ्गम् । तदाहाऽऽश्वलायनः—'प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य' इति । अत्र वृत्तिकारः—आचम्येत्यत्राऽऽचमनविधानं श्रौताचमनप्राप्त्यर्थमिति गायत्रीजपकाले श्रौताचमनं कृत्वा प्राणानायम्य गायत्रीजपं कुर्यादिति मुख्यः पक्ष इति । अन्यच्छ्रुत्याचमनं स्मृत्यन्तरे कथितम्—

'तदोंकारेणाऽऽचमनं यद्वा व्याहृतिभिर्भवेत् ।
सावित्र्या वाऽपि कर्तव्यमिति व्यासेन भाषितम्' इति ॥

अब्लिङ्गैर्नवभिः स्पृशेदित्यादि(?)। पुराणाचमनप्रकारः स्मृत्यन्तरे कथितः-

केशवाद्यैस्त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ ।
द्वाभ्यामोष्ठौ च संमृज्य द्वाभ्यामुन्मार्जनं तथा ॥
एकेन हस्तं प्रक्षाल्य पादावपि तथैकतः ।
एकेनापि च मूर्धानं ततः संकर्षणादिभिः ॥
सर्वासामङ्गुलीनां वै मूलेन चिबुकं स्पृशेत् ।
तर्जन्यङ्गुष्ठयोगेन नासिके द्वे उपस्पृशेत् ॥
अङ्गुष्ठानामिकाभ्यां च चक्षुः श्रोत्रं पुनः पुनः ॥
कनिष्ठाङ्गुष्ठयोगेन नाभिदेशमुपस्पृशेत् ।
करमध्यं हृदि स्थाप्य कराग्रं शिरसि न्यसेत् ॥
मुकुलेन च हस्तेन बाहुमूलमुपस्पृशेत् ।
एवमाचमनं कृत्वा साक्षान्नारायणो भवेत् ॥

अथ प्रकृतोपयोगि स्मार्ताचमनमुच्यते ।

'यः क्रियां कुरुते मोहादनाचम्यैव नास्तिकः ।
भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः'

इति वचनादाचमनं नित्यतयाऽवगम्यते । तत्रायं प्रयोगः—कृताप्लवो बद्धकच्छशिखो यज्ञोपवीती सपवित्रकरो भूमौ पादौ प्रतिष्ठाप्य स्वेष्टदेवतां हृदि निधाय प्रकृतिस्थं फेनबुद्बुदरहितमम्बु संहताङ्गुलिना पाणिना गृहीत्वा ब्रह्मतीर्थेन त्रिस्तूष्णीं पिबेत् । अत्र शौनकः—

द्विजन्मनां वै शुद्ध्यर्थं स्मार्ताचमनमुच्यते।
शिखाकच्छनिबद्धस्तु सोपवीतः समाहितः॥
भूमौ पादौ प्रतिष्ठाप्य प्राङ्मुखो वाऽप्युदङ्मुखः।
प्रक्षाल्य पादौ हस्तौ च प्रभाते मुखमप्यथ॥

स्नात्वा शुद्ध्यर्थं संध्यादिनित्यकर्माधिकारयोग्यतासिद्ध्यर्थमेवमाचमनं कार्यमिति तात्पर्यार्थः। स एवाऽऽचमनोदकमाह—

आचामेन्माषमग्नं [तु] गोकर्णचुलकस्थितम्।
संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः॥
मुक्ताङ्गुष्ठकनिष्ठाभ्यां त्रिः पिबेद्ब्रह्मतीर्थतः।
ततः प्रक्षाल्य पादौ च संकुच्योष्ठौ निमार्ष्ट्यथ॥
संहताङ्गुलिभिर्मूलैस्त्रिः प्रमृज्यात्ततो मुखम्।
प्रक्षाल्य हस्तौ चाभ्युक्ष्य पादशीर्षे तथैव च॥
मध्यमाङ्गुलिपृष्ठैस्तु त्रिः स्पृशेद्घ्राणमूलकम्।
हस्तौ प्रक्षाल्य संस्पृष्ट्वा घ्राणादि द्वयशः पृथक्॥
अङ्गुष्ठेन प्रदेशिन्या घ्राणे पश्चादुपस्पृशेत्।
अङ्गुष्ठानामिकाभ्यां च चक्षुःश्रोत्रे च संस्पृशेत्॥
अङ्गुष्ठोपकनिष्ठाभ्यां नाभिं पश्चादुपस्पृशेत्।
तलेन हृदयं स्पृष्ट्वा स्पृशेदङ्गुलिभिः शिरः॥
अङ्गुल्यग्रैर्बाहुमूले संस्पृशेदिति शौनकः।
प्रणवेनोदकं धृत्वा आत्मानं परिषेचयेत्॥
अनेन विधिना विप्रः कुर्यादाचमनं सदा।

आचमनकाले नियमो दर्शितः—

नाऽऽचामेदासनस्थाङ्घ्रिर्न बद्धासन एव वा।
न प्रसारितपादो वा बहिर्जानुकरोऽपि वा' इति॥
पवित्रकर आचामेच्छुचिः कर्मार्थमादरात्।
कुशमात्रकरो वाऽपि दर्भमात्रकरोऽपि वा।




पवित्रं हिरण्यम्। 'पवित्रं वै हिरण्यम्' इति श्रुतेः।

स्नाने दाने जपे यज्ञे स्वाध्याये नित्यकर्मणि।
सपवित्रौ सदर्भौ वा करौ कुर्वीत नान्यथा।

नित्यकर्मणि संध्यादावित्यर्थः। अत्र महाजनपरिग्रहायाऽऽचमनमूलिका

सूत्रखण्डिका लिख्यते—तिष्ठन्नाऽऽचामेत्प्रह्वो वाऽऽसीनस्त्रिराचामेद्धृदयंगमाभिरद्भिस्त्रिरोष्ठौ परिमृजेद्द्विरित्येके सकृदुपस्पृशेद्द्विरित्येके दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाण्युपस्पृशेच्चक्षुषी नासिके श्रोत्रे चाथाप उपस्पृशेत् । अत्र भाष्यार्थः प्रतिसंस्कृतैः संक्षिप्तैः सोपस्कारैर्बुद्धिवैशद्याय लिख्यते । भूमिगतास्वप्स्वाचम्य प्रयतो भवतीत्यादौ नित्यकर्मादौ प्रायत्यसिद्ध्यर्थमाचमनं विहितं तत्प्रकारमाह—तिष्ठन्निति । तिष्ठन्प्रह्वो वा नाऽऽचामेत् । नन्वासीनस्त्रिराचामेदित्यासनविधानादेवावस्थानादेर्निषेधसंभवे पृथक्तिष्ठन्नाऽऽचामेदित्यारम्भः किमर्थ इति चेत्सत्यम् । इदं हि सूत्रं न तिष्ठदाद्याचमनं निषेधति किं तु जलपानं य(त)थाविधस्य नेति वदति । तथा च गौतमः—'नाञ्जलिना पिबेन्न तिष्ठन्' इति । यद्यप्याचमनप्रकरणे जलपाननिषेधोऽनुपपन्नस्तथाऽप्यासीनस्त्रिराचामेदित्यासनविधानादर्थात्स्थानादेर्निषेधेऽपि शब्दतस्तत्सिद्ध्यर्थं वा पुनरारम्भः । अत्र केचित्—अनेन निषेधेन क्वचिज्जलेऽपि नाभिदघ्ने वोरुदघ्ने वा तिष्ठतः प्रह्वस्य वाऽऽचमनं भवति । तन्निषेधस्योद्धृतोदकाचमनविषयत्वान्निषेधे(त् । तथा च) गौतमः—'न तिष्ठन्नुदकेनोद्धृतेनाऽऽचामेत्' इति । तस्मादनुद्धृतोदके तिष्ठतः प्रह्वस्य वाऽऽचमनसिद्ध्यर्थं तिष्ठन्निति निषेध इत्याहुः । तच्चिन्त्यम् । तिष्ठन्नाऽऽचामेदिति सामान्यनिषेधस्य विशेषपर्यवसानायोगात् । 'नग्नस्य वा नाप्सु सतः प्रयमणं विद्यते' इति सूत्रकारेण जले विद्यमानस्य नाऽऽचमनमस्तीति प्रागेवोक्तत्वाच्च । न च गौतमवचनस्य का गतिरिति वाच्यम् । तस्योद्धृतोदककरणकतिष्ठत्कर्तृकाचमनप्रतिषेधकत्वेऽप्यनुद्धृतोदके विद्यमानस्य तदस्तित्वाप्रतिपादकत्वात् । सूत्रान्तरबाधायां तथापर्यवसा[ना]योगाच्च । त(अ)थाऽऽचमनविधिरुच्यते—आसीनस्त्रिराचामेद्धृदयंगमाभिरद्भिः । द्वितीयार्थे तृतीया । आसीनः शुचौ देशे नाऽऽसने दक्षिणं बाहुमूर्वन्तरे कृत्वा प्राङ्मुख उदङ्मुखो वा हृदयंगमा अपः करतलस्थासु यावतीषु माषो निमज्जति तावतीः फेनबुद्बुदरहितास्त्रिवारमाचामेत्पिबेत् । ब्राह्मणो नाभिगाः क्षत्रियः कण्ठगा वैश्यस्तालुगा इति विवेकः । त्रिरोष्ठौ परिमृजेत् । त्रिवारमङ्गुष्ठमूलेनोष्ठौ परिमृज्याद्द्विरित्येके मन्यन्ते । तुल्यो विकल्पः । दक्षिणेन पाणिना सव्यं पाणिं प्रोक्ष्य तथा पादौ शिरश्चेन्द्रियाण्युपस्पृशेत् । अङ्गुलीभिः सर्वेषामिन्द्रियाणामुपस्पर्शनप्रसङ्गे तद्योग्येन्द्रियाणि परिगणयति—चक्षुषी इति । इन्द्रियाणीति वचनं स्वरूपपरम् । तत्राङ्गुष्ठानामिकाभ्यां चक्षुषी युगपत्पृथग्वा संस्पृशेत् । अङ्गुष्ठप्रदेशिनीभ्यां नासिके । अङ्गुष्ठोपकनिष्ठिकाभ्यां श्रोत्रे [त]योर्युगपत्स्पर्शासंभवेन पृथगिति

निश्चितन्यायेन पूर्वत्रापि पृथगिति सम्यक् । अथाप्युपस्पृशेद्धस्तौ प्रक्षालयेत् । इदं हि स्मार्ताचमनं संध्यादौ कर्तव्यम् । प्रायत्यसंपादकत्वात् । सूत्रकारेण मुख्यतया विहितत्वाच्च । स्मृत्यन्तरेऽपि—

संध्यायां कर्मकाले च स्मृतेराचमनं भवेत् ।
ब्रह्मयज्ञे तु वै कुर्याच्छ्रुतेराचमनं बुधः ॥
गोकर्णीकृतहस्तेन माषमग्नं पिबेज्जलम् ।
तन्न्यूनमधिकं पीतं सुरापानसमं भवेत् ॥
अङ्गुष्ठाग्रं समाकुञ्च्य मध्यमामध्यपर्वणि ।
गोकर्णं तद्धि विज्ञेयं सर्वेष्वाचमनेष्वपि ॥
संहताङ्गुष्ठहस्तेन गृहीत्वा चाम्बु वीक्षितम् ।
मुक्ताङ्गुष्ठकनिष्ठाभ्यां त्रिः पिबेद्ब्रह्मतीर्थतः ॥

अत्रायं विशेषः—स्वयमेव वामहस्तावर्जितेन पयसाऽऽचमनं कर्तुं न शक्यते । सूत्रकारानभिमतत्वात् । तथा हि—यं वा प्रयतमा(आ)चामेदिति । अत्रायमर्थः—प्रयतो यं वाऽन्यमपि आचमयति सोऽपि प्रयतो भवति । सर्वथा स्वयं वामहस्तावर्जिताभिरद्भिराचमनं न कुर्यात् । एतेन शास्त्रान्तरोक्तकमण्डलुधारणमप्याचार्यस्य नाभिमतमिति गम्यते । अलाबुपात्रेण नारिकेलपात्रेण वा स्वयमाचमनमाचरन्ति तन्नाभिमतमाचार्यस्येत्यर्थः । अन्यः प्रयतोऽस्ति चेत्तेनैवाऽऽचमनजलं परिगृह्य स्वयमाचामेत् [तदभावे भूमिगतास्वप्स्वाचामेत् । ] अत एव भूमिगतास्वप्स्वाचम्य प्रयतो भवतीत्यत्राऽऽचम्येति स्वकर्तृकक्त्वाप्रत्ययनिर्देशः । अन्यथा तदानीमप्याचमनीयत्वे(य्ये?)तिनिर्देशापत्तेः । इदमाश्वलायनानामपि समानम् । कथमिति चेदुच्यते—

'संध्यायां कर्मकाले च स्मृतेराचमनं भवेत् ।
ब्रह्मयज्ञे तु वै कुर्याच्छ्रुतेराचमनं बुधः'

इत्यविशेषेण स्मरणात् ।

ननु संध्यायामपि श्रौताचमनमस्तु को दोष इति चेत् ।

'ब्रह्मयज्ञे तु वै कुर्याच्छ्रुतेराचमनं द्विजः'

इति वचनविशेषेण तस्य श्रौतकर्माङ्गत्वात् । 'प्रागुदगाहवनीयादवस्थाय यज्ञोपवीत्याचम्य' इति आश्वलायनश्रौतसूत्र आचम्येति विधानं श्रौताचमनप्राप्त्यर्थमिति वृत्तिकारेण व्याख्यातम् । एवं च तस्य स्मार्तेऽपि प्रवेशे सूत्रतात्पर्यविदां वृत्तिकाराणां व्याकोपः । अनुष्ठाने तु विशेषोऽस्ति । तथा हि—त्रिः पिबेद्-

क्षिणकरेण वामकरे जलं निक्षिप्य हस्तावभ्युक्ष्य मुखं द्विवारं परिमृज्याथ पादावभ्युक्ष्य चतसृभिरङ्गुलीभिरोष्ठौ संमृज्याङ्गुष्ठतर्जनीभ्यां नासारन्ध्रद्वयं संस्पृश्याङ्गुष्ठमध्यमाभ्यां चक्षुषी संस्पृश्याङ्गुष्ठानामिकाभ्यां श्रोत्रे संस्पृश्याङ्गुष्ठकनिष्ठिकाभ्यां नाभिं संस्पृश्य हस्ततलेन हृदयं संस्पृश्य सर्वाङ्गुलीभिः शिरो बाहू च संस्पृशेत्। तदुक्तं बौधायनेन—'प्रथमपानेन' इति? । इदं ह्याचमनं संध्यादौ कर्तव्यम्। अथ संध्योपासनकाल इति तेनैवोक्तत्वात्। अत्र केचिद्भणान्ति—ऋग्वेदाय नमः। यजुर्वेदाय नमः। सामवेदाय नमः। इत्यादिप्रकारेण चतुर्थ्यन्तमन्त्रैः परिकल्पितैरनुष्ठानं कर्तव्यमिति। तन्न। तद्बोधकवचनाभावात्। बौधायनसूत्रस्थतथाविधेतिकर्तव्यताप्रतिपादकत्वेन तत्रासामर्थ्यात्। अन्यथा—

त्रिः प्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः।
ब्रह्मा विष्णुश्च रुद्रश्च भवन्ति हि न संशयः॥

इत्यादिवचनाद्ब्रह्मणे नम इत्याद्याचारापत्तेः। न च बौधायनोक्तं कथमाश्वलायनानां ग्राह्यमिति वाच्यम्। तस्याऽऽश्वलायनवत्तच्छाखाभिमानित्वात्। तदुक्तं स्मृत्यन्तरे—

'बौधायनो जयन्तश्च आश्वलायनशौनकौ।
वृत्तिसूत्रकृतावेभिरुक्तं तत्प्रविविच्या(नच्म्य)हम्' इति।

आश्वलायनश्च वचनस्मृतिकर्ता। सूत्रकृद्वृत्तिकर्तेति विवेकः। न चाऽऽपस्तम्बीयानां श्रौताचमनस्यारणोक्तश्रौताचमनापेक्षया न विशेषोऽस्तीति वाच्यम्। श्रुत्युक्तत्वेन सूत्रोक्तत्वेन च भेदात्। केचित्तु श्रौते त्रिराचामेदित्यादयो मन्त्रास्तान्पठञ्श्रौताचमनं कुर्यात्। स्मार्ते तु तूष्णीमिति भेदमाहुः। इदमत्राऽऽकूतम्—श्रौते द्विः परिमृज्य सकृदुपस्पृशेदिति द्विवारं परिमार्जनमेकवारमुपस्पर्शनं च विहितम्। स्मार्ते तु त्रिरोष्ठौ परिमृजेद्द्विरित्येके सकृदुपस्पृशेद्द्विरित्येक इति तुल्यविकल्पितानुष्ठानमिति विशेष इति सर्वं सुस्थम्।

इति श्रीमद्राघवदैवज्ञवंश्यश्रीकृष्णपण्डितविरचिते तैत्तिरीयसंध्याभाष्ये द्वितीयो गुच्छः॥ २॥

---

## अथ तृतीयो गुच्छः।

---

अथ प्राणायामप्रकारो लिख्यते। अर्थं वा सिषाधयिषुरिति प्राणायामकर्त-

व्यतामतिपादकमापस्तम्बसूत्रम् । तत्र वृत्तिकारः—अर्थं प्रयोजनं तच्च इ[ष्टमदृ]-ष्टं वा सिषाधयिषुः साधयितुमिच्छुः सन्नातमितोराशरीरम्लानेः प्राणमायच्छेत्रिवारं प्राणायामं कुर्यादिति । तस्मात्संध्यावन्दनस्यादृष्टार्थकत्वेन तदादौ प्राणायाम आवश्यक इति सिद्धम् । स्मृत्यन्तरे मनुः—

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥

स्मृत्यन्तरे—गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥

योगयाज्ञवल्क्यः—

भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च ।
सप्त चोंकारसंयुक्तास्तथा तत्सवितुः पदम् ॥

तथोंकारसंयुक्तमित्यर्थः ।

ओमापो ज्योतिरित्येतच्छिरः पश्चात्प्रयोजयेत् ।
त्रिरावर्तनयोगात्तु प्राणायामः स शब्दितः ॥

प्राणायामस्य सकलकलुषनिवृत्तिः फलमित्याह मनुः—

'दशप्रणवसंयुक्ताः प्राणायामास्तु षोडश ।
अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः' इति ॥

विज्ञानेश्वरे—प्राणायामशतं कार्यं सर्वपापापनुत्तये ।
उपपातकजातानामनादिष्टस्य चैव हि ॥

पूरकरेचककुम्भकात्मकान्प्राणायामान्संध्यात्रयेऽप्यादौ त्रीन्कुर्यादिति । स्मृतिरत्नाकरे—

प्राणायमत्रयं कृत्वा संध्योपासनमाचरेत् ।
स्नाने दाने जपे होमे अशक्तावेकमेव वा ॥

अपरार्के—प्राणायामत्रयं कृत्वा संध्यासु च तिसृष्वपि ।

लोकोपकारे—संध्यादावर्घ्यदाने च प्राणायामैकमाचरेत् ।
अन्यत्रैव तु कर्तव्याः प्राणायामास्त्रयस्त्रयः ॥

संध्यादावेकानेकयोर्विकल्पः । एवं च प्राणायामस्त्रिविधः । तदुक्तम्—

पूरकः कुम्भको रेच्यः प्राणायामस्त्रिलक्षणः ।
नासिकाकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते ॥
कुम्भको निश्चलश्वासो रिच्यमानस्तु रेचकः ।

त्रयाणामनुसंधानप्रकारमाह—

वामनासापुटेनैव पूरयेत्पूरकः स्मृतः।
कुम्भको निश्चलश्वासस्तावत्कालं समन्त्रकम् ॥
दक्षनासापुटेनैव रेचयेद्रेचकः स्मृतः' इति।

ग्रन्थान्तरे—वामेन पूरयेद्वायुं पूरणात्पूरकः स्मृतः ॥
वायुं निगृह्य मनसा जपेन्मन्त्राननन्यधीः।
कुम्भकः स तु विज्ञेयः प्राणायामस्य लक्षणम् ॥

स्मृत्यर्थसारे व्यासः—

'दक्षिणे रेचकं कुर्याद्वामेनाऽऽपूर्य चोदरम्।
कुम्भकेन जपं कुर्यात्प्राणायामः स उच्यते ॥
पञ्चाङ्गुलीभिर्नासाग्रपीडनं प्रणवाभिधा।
मुद्रेयं सर्वपापघ्नी वानप्रस्थगृहस्थयोः ॥
कनिष्ठानामिकाङ्गुष्ठैर्नासाग्रस्य [प्र]पीडनम्।
ओंकारमुद्रा सा प्रोक्ता यतेश्च ब्रह्मचारिणः ॥ इति ॥

स्मृत्यन्तरे—'समुन्मीलितदृङ्मौनी प्राणायामः समभ्यसेत्' इति।
एवं प्राणायामः कर्तव्य इति स्थिते तद्विनियुक्तो मन्त्रस्ताबद्व्याख्यायते—

ॐ भूः। ॐ भुवः। ओꣳ सुवः। ॐ महः। ॐ जनः। ॐ तपः। ओꣳ सत्यम्। ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्। (तै० आ० प्र० १० अ० ३५)

ओं भूरिति। अनेन मन्त्रेण नासाग्रन्यस्तलोचनस्तदभिधेयं ब्रह्म हृदि ध्यायन्पूर्वोक्तमन्त्रेण प्राणायामत्रयं कर्तव्यमिति वेदितव्यम्। अत्र प्रथमतः प्रणवपदं भूलोकाद्यभिमानिन्यो देवता ओंकारार्थब्रह्मैक्येन स्तूयन्त इति तात्पर्येण निर्दिष्टम्। वस्तुतस्तु ओमिति पदस्याङ्गीकृतिवाचकत्वमङ्गीकृत्य भूलोकाद्यभिमानिन्यो देवता मया कृतमाह्निकमनुजानन्त्वित्याशयेन भक्तिश्रद्धापूर्वकं तद्देवतायै स्वकृतकर्मनिवेदनसिद्ध्यर्थं तत्पदमादौ वर्णितम्। निगर्वस्तु—ओमिति

ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपासवानीति । ओंकारः स्वर्गद्वारं तस्माद्ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत ।

'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा पुनर्यातौ तेन माङ्गलिकावुभौ' ॥

इति श्रुतिसूत्रस्मृतिषु प्रणवस्य श्लाघ्यतया निर्दिष्टत्वादत्राप्यादौ तन्निर्देशः। अत्रायमक्षरार्थः–अवति संसारसागरादिति 'ओम्'। ये हि पुरुषधौरेया नित्यनैमित्तिककर्मभिः फलानभिसंधिकृतैः परमेश्वरं नित्यमाराधयन्ति तेभ्यः स्वात्मतत्त्वं प्रतिपाद्य तान्दुस्तरसंसारसागरात्तारयतीति तात्पर्यार्थः । तारयति तस्मादुच्यते तार इति श्रुतेः।'नमस्ताराय' इत्यत्र तथा व्याख्यातत्वाच्च। अत एव प्रणवपर्यायेषु तारपदप्रयोगं पश्यामः। 'यमेवैष वृणुते तेन लभ्यः' इति तदनुग्रहस्यैव तत्साक्षात्कारहेतुत्वमिति तदनुकम्पित एव शोकं तरतीति तात्पर्यम्। रूपनिष्पत्तिप्रकारस्तु—अव रक्षण इति धातोरवतेष्टिलोपश्चेत्यौणादिकसूत्रेण मन्प्रत्ययो विहितः। तस्य ज्वरत्वरेत्यादिनोठ्। ततो गुणः। ततः श्लिष्टोच्चारणमिति प्रक्रिययोमिति निष्पन्नम् । 'अकार उकारो मकार इति तानेकधा समभरत्तदेतदोमिति' [ऐ० ब्रा० अ० २५ ख० ७] इति श्रुतेः ।'ओंकारः सर्ववेदानां सारभूतः प्रकीर्तितः' इति वचनात् । 'प्रणवः सर्ववेदेषु' इति गीतावचनाच्च । 'ओमिति वै दैवं सर्वम्' इति श्रुत्या च सर्ववेदसारभूतत्वात्सर्वमयत्वश्रवणात्तस्याऽऽदौ व्यपदेशः । सर्वमयत्वं च सर्वात्मकब्रह्माभिव्यक्तियोग्यस्थानत्वात्। तदुक्तमाचार्यैः—'नेदीयो ब्रह्मणः स्थानं शालग्रामो हरेर्यथा' इति । प्रकरणादोंकारस्य परामर्शः। तदक्षरं नेदीयोऽन्तिकतमं स्थानं नित्यानपायि तदभिव्यक्तियोग्यमित्यर्थः। अत एव 'ओमित्येकाक्षरं ब्रह्म गिरामस्म्येकमक्षरम्' इत्यादिषु तस्य ब्रह्मत्वाभिधानात्तदभिव्यक्तियोग्यत्वम् । अन्यथा योगपातञ्जलसूत्रे 'तस्य वाचकः प्रणवः' इति प्रणवस्य तद्वाचकत्वाभिधानं मुधा स्यात्। ओंकारस्यैव ब्रह्मत्वात्। किं तु तुरीयाश्रमस्वीकारवेलायां 'वेदानिमं लोकममुं च परित्यज्य' इत्यादिना सकलवेदपरित्यागो बोध्यते। तथाऽपि प्रणवस्यापरित्याग एवेति सकलवेदसारभूतत्वमवगम्यते । 'यतीनां प्रणवो मन्त्रः' इति वचनात्। यतिधर्मप्रकरणे मनुनाऽप्युक्तम्—

'आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्' इति ।

अत्र वेदाभ्यासः प्रणवाभ्यास इति विज्ञानेश्वरेणोक्तम्। किंच 'आत्मला-

भान्न परं विद्यते' 'न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः' इत्यादिष्वात्मतत्त्वलाभः परमश्रेयानिति श्रूयते। तत्र प्रणवं जपतस्तदर्थं भावयतश्चित्तैकाग्र्यद्वारा तल्लाभः सिध्यतीति लोकानुजिघृक्षया प्रथमतस्तन्निर्देशः कृतः। अतस्तज्जपस्तदर्थानुसंधानपुरःसरं कर्तव्य इत्युक्तम्। तदुक्तं योगपातञ्जलसूत्रे—'तज्जपस्तदर्थभावनम्' इति। अत्र भाष्यम्—प्रणवस्य जपः प्रणवाभिधेयस्य चेश्वरस्य भावनं तस्मादस्य जपतः प्रणवार्थं च भावयतश्चित्तमेकाग्रं संपद्यते। तथा चोक्तम्—

'स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत्।
स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते' इति॥

प्रणवस्यापि स्वाध्यायत्वेन तज्जपाच्चित्तैकाग्र्यलक्षणो योगः संभवति। 'योगश्चित्तवृत्तिनिरोधः' इति पातञ्जले योगलक्षणदर्शनादिति सर्वं सुन्दरम्।

प्रकृतमनुसरामः। 'भूः' लोकः। भूरिति भूर्लोक इति गायत्रीहृदये दर्शनात्। 'ओं' प्रणवात्मकः प्रणवाभिधेयब्रह्माभिन्न इत्यर्थः। ब्रह्मसत्ताव्यतिरेकेण भूलोकादिप्रपञ्चस्य पृथक्सत्तानङ्गीकारादिति भावः। वस्तुतस्तु भूरिति भूलोकाभिमानिनी देवता। ओमित्यङ्गीकृतौ। ओं प्रश्नेऽङ्गीकृताविति कोशात्। भूलोकाभिमानिनी देवता मत्कृतमाह्निकमङ्गी करोत्विति। तत्तल्लोकाभिमानिदेवतायै स्वकृतमाह्निकं समर्पयामीति प्रार्थ्यत इत्यर्थः। प्रतिपदं प्रणवकीर्तनमतिदार्ढ्यार्थमिति बोध्यम्। तदुक्तम्—

'सप्त व्याहृतयः सप्त लोका भूरादयः क्रमात्।
प्रत्येकं प्रणवादित्वात्तन्मया इति सूच्यते॥
ब्रह्मादिश्च तुरीयं च प्रणवस्यार्थ ईरितः।
तन्मयत्वेन भूरादीन्ध्यात्वा सप्रणवां जपेत्' इति॥

गायत्री तु जपावसरे व्याख्यायते। ओमापो ज्योतिरिति गायत्रीशिरः तस्यायमर्थः—'आपः' जलम्, 'ओं' ब्रह्मैवेत्यर्थः। आपः स्त्री भूम्नीति कोशात 'ज्योतिः' सौरादितेज ओं ब्रह्म। 'तेजस्तेजस्विनामहम्' इति गीतावचनात् 'रसः' मधुरादिर्ब्रह्मैव। 'रसोऽहमप्सु कौन्तेय' इति गीतावचनात्। 'यच्च 'अमृतं देवानामन्नभूतं पयस्तदपि प्रणवप्रतिपाद्यं ब्रह्मैवेत्यर्थः। 'ब्रह्म' सामवेदः। वेद स्तत्त्वं तपो ब्रह्मेति कोशात्। 'वेदानां सामवेदोऽस्मि' इति गीतावचनात्। 'भूर्भुव सुवरोम्' इति सप्तानां भूलोकादीनामुपलक्षणम्। सर्वं पूर्ववत्। ओं ब्रह्म यद्वा ब्रह्मशब्दस्य परब्रह्मैवार्थः। तथा च—ओंकारवाच्यं ब्रह्म परब्रह्मेत्यर्थः शेषं सुगमम्।

(सफलो मार्जनप्रकारः)

अथ सायंकाले नद्यादिजलाशयं गत्वा पादौ हस्तौ च प्रक्षाल्य विधिवदाचम्य शुभ्रवस्त्रं धृत्वा द्विराचम्य प्राङ्मुख उदङ्मुखो वोर्ध्वज्ञुरुपविश्यान्तर्जानुकरः कुशपाणिस्त्रीन्प्राणायामान्कृत्वाऽशक्तश्चेदेकं वा कृत्वा ममोपात्तदुरितक्षयार्थमिष्टदेवताप्रीत्यर्थं सायंसंध्यामुपासिष्य इति संकल्प्य प्रशस्तमुदकं ब्रह्ममुखाख्येन मन्त्रेणाभिमन्त्र्य च—

आपो हि ष्ठादिभिर्मन्त्रैर्दर्भैः शिरसि मार्जयेत्।

ब्रह्ममुखोऽयं मनुना निरुक्तः—

‘ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः।
त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम्, इति।

मार्जयेदिति मार्जनं नाम शिरसि प्रोक्षणम्।

‘शिरसि प्रोक्षयेन्मन्त्रैः कुशैः सोदकबिन्दुभिः’ इति वचनात्।

अत्र मार्जनप्रकार उक्तः स्मृत्यन्तरे—

‘आपो हि ष्ठेति तिसृभिर्दर्भैर्मार्जनमाचरेत्।
पदे पदे क्षिपेन्मूर्ध्नि प्रतिप्रणवसंयुतम्॥

तिसृभिस्तृचस्थैर्नवभिः पदैरित्यर्थः। पदे पद इति लिङ्गात्। प्रतिपदं प्रणवसंयुतमित्यर्थः। मार्जनस्य फलमाह व्यासः—

‘रजस्तमोमोहजाताञ्जाग्रत्स्वप्नसुषुप्तिजान्।
वाङ्मनःकायजान्दोषान्नवैतान्नवभिर्दहेत्॥

शौनकः—

आत्मानं प्रणवेनैव परिषिच्य जलैः सह।
कुर्यात्सप्रणवैः पादैर्मार्जनं तु कुशोदकैः॥
यस्य क्षयायेति जलं सकुशं प्रक्षिपेदधः।

शातातपः—

‘ऋगन्ते वाऽथ पादान्ते मार्जनं तु समीहितः।
अर्धर्चान्ते तथा कुर्याच्छिष्टानां मतमीदृशम्’ इति।

तच्च मार्जनमविच्छिन्नधारया कार्यम्। तदुक्तं माधवीये—

‘धाराच्युतेन तोयेन संध्योपास्तिर्विगर्हिता।
पितरो न प्रशंसन्ति न प्रशंसन्ति देवताः॥

कथं तर्हि कर्तव्यमित्याशङ्क्य तत्रैवोक्तम्—

‘नद्यास्तीरे तटाके वा भाजने मृन्मयेऽपि वा।

औदुम्बरे वा सौवर्णे राजते दारुसंभवे ॥
धृत्वा तु वामहस्ते वा संध्योपास्तिं समाचरेत् ' इति ।

धृत्वेति मृन्मयभाजनादिभिः सर्वैः संबध्यते । सर्वत्रोदकमिति शेषः । ननु वामपाणौ निधाय मार्जनं कार्यमिति वर्णितं तत्तु—

' वामहस्ते जलं धृत्वा ये तु संध्यामुपासते ।
सा संध्या वृषली ज्ञेया असुरास्तैस्तु तर्पिताः ' ॥

इति शास्त्रान्तरविरुद्धं भवतीति चेन्न । तद्वचनस्य पात्रान्तरसंभवविषयत्वात् । तदुक्तं पराशरमाधवीये—मृन्मयादिपात्रान्तरसद्भावे वामहस्तो निषिद्धः । मृन्मयाद्यभावे ' कृत्वा तु वामहस्ते वा ' इति विधानात् । तेन न कोऽपि विरोधः । मन्त्रागमे विशेषः कीर्तितः—

' स्पृष्ट्वा हस्तेन वामेन तटे नद्यादिकेषु च ।
पाणिना दक्षिणेनैव मार्जयेत्सकुशेन तु ॥
पात्रस्थितोदकेनैव वामहस्तोदकेन वा ।
गृहीत्वा मार्जनं कुर्यादन्यथा नाऽऽचरेत्सदा ' इति ॥

एवं मार्जनं कर्तव्यमिति स्थिते तद्विनियुक्तमन्त्रार्थो विचार्यते ।

## आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे । (तै० आ० प्र० १० अ० १)

आपो हि ष्ठेति । हे ' आपः ' । हिशब्द एवकारार्थः । तथाच यूयमेवेत्यर्थः पर्यवसन्नः । ' मयोभुवः ' सुखसंपादयित्र्यः ' स्थ ' भवथ । दीर्घश्छान्दसः । तासां स्नानादिहेतुत्वेन सुखोत्पादकत्वं जगत्प्रसिद्धमिति भावः । यद्वा हे आपः, यूयमिति शेषः । स्थेतिलिङ्गबलात् । ' मयोभुवः ' सुखभूमयः ' स्थ हि ' भवथ खलु । दर्शनस्पर्शनस्नानाद्यनेकक्रियाभिः सकलभूतजातस्य परमानन्दकरा इति भावः । मय इति सुखवाचि । ' यद्वै शिवं तन्मयः । आपो हि ष्ठ सुखभुवः ' इति निरुक्तिदर्शनाच्च । किं च ' ताः ' एवं सुखभूमयो यूयं 'नः' अस्मान् । 'बहुवचनस्य वस्नसौ' इति पाणिनिस्मरणान्नसादेशः । 'ऊर्जे' अन्नाय ' दधातन ' स्थापयत । ऊर्जेऽन्नायेति निरुक्तिवचनात् । अस्मदीयशाल्यादिकं सम्यग्धारानिपातैर्वर्धयित्वा बह्वन्नमस्मभ्यं संपाद्य तत्र प्रीतियुक्तानस्मान्स्थापयतेति तात्पर्यम् । नन्वपामन्नसाधनत्वे मानाभावादिति चेन्न । 'आपो वा अन्नम' इति श्रुतेरेवान्नसाधनत्वात् । तत्राभेदनिर्देशस्तु

'एतावदरे खल्वमृतत्वम्' इतिवदौपचारिक इति निगर्वः। यद्वा—ऊर्जे इति द्वितीयया परिणम्यते। एकारश्छान्दसः। ऊर्जे इति ऊर्क्शब्दद्वितीयैकवचनस्यैकारो व्यत्ययनिबन्धन इत्यन्ये। तथा चायमक्षरार्थः—ऊर्जमन्नं दधातन धत्त, दधातेर्लेट् परस्मैपदे मध्यमपुरुषवचनस्य तनादेशः। 'तप्तनप्तनथनाश्च' इति पाणिनिस्मरणात्। ननु नान्नयाचनं युक्तम्। तस्य केवलैहिकत्वात्तथात्वे महाजनपरिग्रहो न स्यात्। तदुक्तम्—'ऐहिकान्वकवृत्तांश्च वाङ्मात्रेणापि नार्चयेत्' इति चेत्। शरीरमात्रनिकर्ष(पोष)णपरतया तदङ्गीकारे दोषः स्यान्न चैवमन्नयाचनस्य(नेऽ)स्य तत्त्वज्ञानोपयोगित्वादित्याह--महे रणायेति। 'महे' महते 'रणाय' रमणीयाय 'चक्षसे' तज्जन्यज्ञानेक्षणाय चे(स्वे)न्द्रियस्वा-[स्थ्य]तया च(स्व)ज्ञानायेत्यर्थः। बह्वन्ने संपादिते तेन सर्वेन्द्रियग्रामसंतुष्टिर्भवति तत्स्वास्थ्ये सकलबुद्धयः फलवत्यो भवन्तीति प्रथमतस्तद्याचनमिति तात्पर्यार्थः। वस्तुतस्तु--ननु याचितमन्नं किमर्थमित्याशङ्क्य सकलसत्कर्मोपयोगीन्द्रियस्वास्थ्यसिद्ध्यर्थमित्याह--महे रणायेति। निगदव्याख्यातम्। 'चक्षसे' इन्द्रियाय। छान्दसमेतत्। ऊर्जे दधातनेति पूर्वेण संबन्धः। इन्द्रियाणां महत्त्वरमणीयत्वसिद्ध्यर्थमन्नं याचितम्। अनेनेन्द्रियाणि महान्ति बलवन्ति सत्कर्मानुष्ठानक्षमाणीति यावत्। रमणीया शक्तिर्भवति। 'अन्नाद्भूतानि जायन्ते। जातान्यन्नेन वर्धन्ते' इति श्रुतेः। इन्द्रियाणामपि भूतत्वादित्यर्थः। तथाच सकलेन्द्रियदार्ढ्ये सति सकलसत्कर्मानुष्ठानं सुलभम्। इन्द्रियमोक्षे तदसंभवात्। अत एवार्थी समर्थो विद्वानित्यत्राधिकारिणः सकलेन्द्रियपटुत्वसिद्ध्यर्थं सामर्थ्यमुपात्तम्। तच्च दार्ढ्यमन्नाधीनमिति तदर्थमन्नं याचितमिति फक्किकार्थः।

किं चेदानीं रसमेवान्नमिन्द्रियपुष्टिकरमिति तं रसं याचते—

**यो वः॑ शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह नः॑।**
**उ॒श॒तीरि॑व मा॒तरः॑। (तै० आ० प्र० १० अ० १)**

यो व इति। युष्माकं 'शिवतमः' अतिशयेन सुखकरः। रस्यते स्वाद्यते इति 'रसः' सारविशेषः। समस्तरसतेः स्वादनार्थत्वाद्रस्यन्त इति रस इति रसनिर्वचनात्। 'इह' जन्मनि कर्मणि वा 'नः' अस्मान् 'तस्य' तं रसं, द्वितीयार्थे षष्ठी ज्ञेया। 'भाजयत' प्रापयत। कथमिति चेत्। मातरः स्वपुत्रान्स्वस्तन्यरसदानेन यथा वर्धयन्ति तद्वदित्याह—उशतीरिति। 'उशतीः' कामयमानाः प्रीतियुक्ता इति यावत्। प्रथमार्थे द्वितीयावचनं छान्दसम्।

'मातरः' स्वपुत्रानिति शेषः। स्वस्तन्यरसमिवेत्यर्थः। यथा मातरो वत्सला भूत्वा स्ववत्सान्स्तन्यं पाययन्ति तद्वद्यूयमस्मान्युष्मदीयरसं भाजयतेति भावः। इदानीं जलनिष्ठं रसं पूर्वं याचितमत्यादरतया भङ्ग्यन्तरेण पुनरपि याचते--

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ।
आपो जनयथा च नः। (तै० आ० प्र० १० अ० १)

यस्येति। 'यस्य' रसस्य 'क्षयाय' निवासेनेत्यर्थः। तृतीयार्थे चतुर्थी वचनं छान्दसम्। 'जिन्वथ' यूयं प्रीता भवथ। यादृशं रसविशेषमवलम्ब्य यूयं परमानन्दनिमग्ना भवथेत्यर्थः। वयं च 'तस्मै' तादृशरससिद्ध्यर्थं 'वः' युष्मान् 'अरं' भृशं 'गमाम' गच्छेम प्राप्नुम इत्यर्थः। हे आपो युष्मासु यो रसोऽस्ति तं रसमस्मभ्यं दत्तेत्यब्देवताः प्रार्थय इति तात्पर्यार्थः। अनेन मन्त्रेण सदर्भं जलमधो निक्षिपेत्। तदुक्तम्—

'यस्य क्षयायेति जलं सकुशं प्रक्षिपेदधः' इति।

किं च 'एष वा अनृणो यः पुत्री' इति श्रुत्या प्रजासंततेरानृण्यहेतुत्वेनाऽऽवश्यकत्वप्रतिपादनात्तत्सिद्ध्यर्थमब्देवताः प्रार्थयते—हे 'आपः' हे जलाधिष्ठानदेवता 'नः' अस्मान् 'जनयथ' प्रजोत्पादनसमर्थान्कुरुत। तं रसमस्मभ्यं दत्त्वाऽस्माकं पुत्रसंपत्तिं संपादयत। वयं च तेनैव रसेन जाताः स्मः। तथाविधरसस्य सकलप्राणिजन्महेतुत्वात्। न चात्र प्रमाणाभावः। 'आपो वा इद९ सर्वम्' इति श्रुत्या सकलभूतानामम्मयत्वश्रवणादिति तात्पर्यम्। उक्तोऽर्थः श्लोकरूपेण कथ्यते—

आपः सुखकरा नित्यं यूयं ता दत्त नोऽशनम्।
रम्यभूरिदृशेऽस्माकमक्षं तेन हि वर्धते॥
यो रसो वः शुभतमस्तं प्रापयत चेह नः।
स्तन्यं वत्सान्पाययन्ति मातरो वत्सला यथा॥
तस्मै तत्सिद्धये युष्मानलं गच्छेम सादरम्।
यूयं यद्वा स्वतः प्रीता आपो जनयथ स्फुटम्॥

अत्र नवसु पादेषु मार्जनं कार्यं तथा शिष्टाचारादिति तात्पर्यम्। ननु मार्जनेन बाह्यशुद्धिसंभवेऽपि नाऽऽन्तरशुद्धिः संभवति। अन्यत्र विनियुक्तस्य वचनमन्तराऽन्यत्र विनियोगायोगात्। न हि मार्जनस्याऽऽन्तरशुद्धावपि हेतुत्व-

संपादकं किंचिदस्ति । न च मानसदोषो नास्तीति वाच्यम् । कायिकादिवत्परहिंसाचिन्तनरूपस्य तस्यापि प्रसिद्धत्वात् । न च तथाऽपि का नो हानिः । मानसपापानिवृत्तावधिकारप्रच्यवप्रसङ्गात् । नित्यपरिशुद्धस्यैव तदपेक्षितत्वात् । किं चाभोज्यापेयादिदुष्टवस्तुसंसर्गकरणनिबन्धनमुदरादिकृतं पातकमस्ति तस्य केन निवृत्तिः स्यात्तस्मादनेकेषामान्तरपातकानां सत्त्वेन कथमुत्तरे कर्मणि निःशङ्कमधिकारः स्यादित्याशङ्क्य सर्वकल्मपनिवर्तकं जलपानमाचरणीयमिति तेनान्तर्बहिश्च नैष्कलङ्का शुद्धिर्भवतीति तद्विनियुक्तं तावदाह—

अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः ।
पापेभ्यो रक्षन्ताम् । यदह्ना पापमकार्षम् ।
मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण
शिश्ना । अहस्तदवलुम्पतु । यत्किंच दुरितं
मयि । इदमहं माममृतयोनौ । सत्ये ज्योतिषि
जुहोमि स्वाहा । (तै० आ० प्र० १० अ० ३१)

अग्निश्चेति । अनेन मन्त्रेण सायं जलपानं कर्तव्यम् । सूर्यश्चेति मन्त्रेण प्रातः । आपः पुनन्त्विति मन्त्रेण दिनमध्य इति विवेकः । सर्वत्र तदन्त आचमनं कार्यम् । तदुक्तं माधवीये भरद्वाजेन—

'सायमग्निश्च मेत्युक्त्वा प्रातः सूर्येत्यपः पिबेत् ।
आपः पुनन्तु मध्याह्ने तत आचमनं चरेत्' इति ॥

मन्त्रस्यायमक्षरार्थः—योऽयम् 'अग्निः' अस्ति यो 'मन्युः' क्रोधो ये च 'मन्युपतयः' क्रोधस्वामिनो रागद्वेषादय इत्यन्ये, ते सर्वेऽपि देवा 'मन्युकृतेभ्यः' मन्युना कोपेन कृतेभ्यो निष्पादितेभ्यः 'पापेभ्यः' दुरितेभ्यो 'मा' मां 'त्वमावेकवचने' इति पाणिनिस्मरणात् । 'रक्षन्तां' प्रार्थनायां लोट् । ते सर्वे देवास्तत्पापविनाशनेन मां पालयन्त्विति तदेकशरणः कर्मकर्ता सर्वान्देवान्वशी करोतीति भावः। किं च 'अह्ना' दिनेनातीतेन दिनभागेनेत्यर्थः। 'घस्रो दिनाहनि' इति कोशात्। 'यत्पापं' दुरितम् 'अकार्षं' कृतवानस्मि। प्रातःकालादारभ्यैतावत्कालपर्यन्तं मध्यवर्तिनि काले यद्दुरितमकार्षमिति भावः। अह्नेति तृतीयावचनं सप्तम्या परिणम्यत इति तात्पर्यम्। किं तत्र साधनं केन तस्य निवृत्तिरित्यत

आह--मनसेति। 'मनसा' अन्तःकरणेन 'वाचा' भाषणेन 'हस्ताभ्यां' कराभ्यां 'पद्भ्यां' चरणाभ्यां, पदादयः पृथक्शब्दा इत्येक इति वृद्धनिर्देशात्। 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इति कोशाच्च। शसादौ पादशब्दस्य पदादेश इति केचित्। 'उदरेण' जठरेण 'शिश्ना' शिश्नेन। स्त्री चिह्नं च पुमाञ्शिश्न इति कोशात्। तत्र क्विपमिच्छन्तीति केचित्। छान्दसमित्यन्ये। यत्पापमकार्षमिति संबन्धः। 'तत्' एवंभूतं पापम् 'अह रवलुम्पतु'। ननु सायंसंध्यावन्दनकाले तपनपरिस्पन्दात्मकस्याह्नः समतीतत्वेनाविद्यमानत्वात्कथमहस्तदवलुम्पन्त्विवाति प्रार्थ्यत इति चेन्न। अह्नस्तदानीमसतोऽपि प्रागनुभूतस्य संभवादहःशब्देन तदभिमानिन्या देवतायास्तादृक्सामर्थ्यसंपन्नाया विवक्षितत्वाद्वा तत्संभवः। अत एवाहरवलुम्पतु तदभिमानी देवो नाशयत्विति पूर्वव्याख्यातारः। अत्र परपीडाद्यनुचिन्तनं मानसमप्रियानृतमुखरभाषणादिकं वाचिकं तृणच्छेदनलोष्टविमर्दनादिकं पाणिकृतं चरणेन गोस्पर्शनादिकं पादकृतमभोज्यभोजनादिकमुदरकृतमगम्यागमनादिकं शिश्नकृतमिति निर्णयः। किं बहुना परिगणनेनेति सर्वं सकृदेव संगृह्णाति--यत्किंचेति। 'यत्' चान्यत्पापं 'मयि' निष्पन्नं, किं चेति वाक्यान्तरोपन्यासे। 'इदं' पापजातं सर्वं तत्कर्तारं 'मां' चाहंकाराख्यं कर्तृत्वाद्याश्रयग्रन्थिविशेषं लिङ्गशरीररूपमित्यन्ये। 'अमृतयोनौ' मरणरहितजगत्कारणे 'सत्ये' बाधारहिते 'ज्योतिषि' स्वयंप्रकाशेऽहं 'जुहोमि' प्रक्षिपामि, अहमनेन होमेन तत्सर्वं भस्मी करोमीत्यर्थः। तदर्थमभिमन्त्रितं 'स्वाहा' मदीयवदनान्तराग्नौ देदीप्यमाने सुष्ठु हुतमस्तु। सुष्ठ्वाह वा स्वैव वागाह वा स्वाहुतं हविर्जुहोतीति चेति निरुक्तिदर्शनात्। द्वितीयपक्षे वाग्देवतैवमाह वदतीत्यर्थः।

अथ प्रातरपां प्राशने विनियुक्तं मन्त्रमाह—

सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम्। यद्रात्रिया पापमकार्षम्। मनसा वाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना। रात्रिस्तदवलुम्पतु। यत्किं च दुरितं मयि। इदमहं माममृतयोनौ।

सूर्ये ज्योतिषि जुहोमि स्वाहा । ( तै० आ० प्र० १० अ० ३२ )

सूर्यश्चेति। मन्त्रो गतार्थः। विशेषस्तु 'सूर्यः' भानुः 'यद्रात्र्या' यत् 'पापमकार्षं रात्रिस्तदवलुम्पतु' इति, रात्री रात्र्यभिमानिनी देवता तत्पापमवलुम्पतु परिहरतु । 'यत्किंच दुरितं मयि' अन्यच्च यत्किंचिदबुद्ध्या कृतं पापरूपं मयि मच्चित्ते वर्तते तत्पापशमनार्थम् 'इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा' इत्युक्त्वा जलं पिबेत्। अत्र पितामहवचनम्—

'सूर्यश्चेत्यनुवाकेन ह्यपः पीत्वा समाहितः ।
प्रातःकाले विशुद्धात्मा कर्मण्यो भवति द्विजः' इति ॥

अत्र मन्त्रार्थः श्लोकरूपेण पुरातनैः कथितः स लिख्यते—

सूर्यो मन्युश्च मा मन्युपतयो मन्युजादघात् ।
मुञ्चन्तु हस्तपच्छिश्नमनोवागुदरैरपि ॥
रात्र्यामकार्षं पापं यद्रात्रिरेवावलुम्पतु ।
अबुद्धिकृतमप्येनो यत्किंचिद्दुरितं मयि ॥
तच्छान्त्यर्थमहं सूर्ये जुहोमि ज्योतिषि स्वयम् ।
प्रक्षिप्यामृतयोनौ मां मुच्येय मृत्युबन्धनात् ॥

अथ मध्याह्ने जलप्राशनविनियुक्तं मन्त्रं तावदाह—

आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम् । यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहꣳ स्वाहा । (तै० आ० प्र० १० अ० ३०)

आपः पुनन्त्विति । या 'आपः' सन्ति ताः 'पृथिवीं पुनन्तु' प्रक्षालनेन शोधयन्तु। अपां सकलदेवतास्वरूपतया परमपवित्रवस्तुत्वात्पवित्रीकरणं युक्तम् । 'आपो वै सर्वा देवताः' इति श्रुतेः। 'आपः स्वभावतो मेध्याः' इति स्मृतेश्च । सा च पृथिवी ताभिरब्धाराभिरिति 'पूता' पवित्रीकृता शुद्धा सतीत्यर्थः । 'माम्' अनुष्ठातारं 'पुनातु' शोधयतु । उत्तरकर्मण्यधिकारिणं करोत्वित्यर्थः ।

प्रथमतो न वर्षधारास्वाचामेदिति निषेधाद्वर्षधारासु प्रायत्यकरणस्याऽऽचमनादेः कर्तुमशक्यत्वाद्भूमिगतत्वसिद्ध्यर्थमापः पुनन्तु पृथिवीमिति प्रार्थितम्। ततो भूमिगतास्वप्स्वाचामेदितिविधायकवचनाद्भूमिगतानामपां प्राशनकरणात्पृथिवी पुनातु मामिति प्रार्थ्यत इति सादरम्। 'ब्रह्मणो' वेदस्य 'पतिः' सकलवेदप्रतिपाद्यः परमात्मेत्यर्थः। 'वेदैश्च सर्वैरहमेव वेद्यः' इति स्मृतेः। 'षष्ठ्याः पतिपुत्र' इत्यादिना पत्यादौ परे षष्ठीविसर्गस्य च्छन्दसि बहुलमिति सत्वम्। परमेश्वरः 'पुनन्तु' पुनातु। बहुत्वकथनं छन्दसि। यद्वा ब्रह्मणो वेदस्य पतिरुपदेष्टा तमाचार्यमित्यर्थः। 'सुपां सुलुक्' इति सुपः सुरित्ययमादेशः। तं मामकमाचार्यमापः पुनन्तु। तस्य फलमाह—ब्रह्मेति। 'ब्रह्म' वेदस्वरूपं तेनाऽऽचार्येणोपदिष्टमिति शेषः। 'पूता' स्वयं पूतं सत्। सुपां सुलुगित्यादिना सुपो डादेशः। 'माम्' अध्येतारं 'पुनातु'। आचार्यस्याऽऽपः प्रायत्यं संपादयन्तु। तादृशाचार्योपदिष्टवेदान्तर्भूतसंध्यावन्दनमन्त्राः स्वस्य प्रायत्यं संपादयन्त्वित्यर्थः। इदानीं स्वकृतपातकजातं परिगणयंस्तन्निवृत्तये साक्षादेवापः प्रार्थयते—यदिति। 'उच्छिष्टम्' अवशिष्टमन्नं भुक्तावशिष्टरूपमुच्छिष्टं 'यत्' अस्ति यत् 'अभोज्यं' भोक्तुमयोग्यं केशकीटमूषिकापुरीषतदङ्गावपन्नं यदस्ति तदेतद्द्विविधं, समुच्चयद्योतकचकाराभावश्छान्दसः। मया कदाचिद्भुक्तम्। कीटाद्यवपन्नमन्नभोज्यमित्येतत्सामयाचारिकेषु दृश्यते—'यस्मिंश्चान्ने केशः स्यादन्यद्वा मेध्यममेध्यैरवमृष्टं कीटो वाऽमेध्यसेवी मूषकलाङ्गं वा' इति। मूषकला मूषिका पुरीषमङ्गं मूषकलाङ्गमुपसमस्तमपि मूषकपदमपेक्ष्यत इति वृत्तिकारः। अथवोच्छिष्टं पित्रादिभुक्तावशिष्टं 'पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम्' इतिसूत्रविहितमपि तयोर्धर्मानुष्ठानविपर्ययेऽभोज्यं भोक्तुमनर्हम्। 'धर्मविप्रतिपत्तावभोज्यम्' इत्यापस्तम्बस्मरणात्। तत्र वृत्तिकारः—यदि तयोर्धर्माद्विप्रतिपत्तिरपायो भवति ततो न भोज्यम्। यद्वा भुञ्जानस्य ब्रह्मचारिणो धर्मविप्रतिषेधो भवति मधुमांसादिमिश्रितत्वेन ततो न भोज्यमिति। तादृशमपि क्वचित्प्रमादादिना मया भुक्तमस्ति। यद्वोच्छिष्टं सर्वजनभुक्तोच्छिष्टं यदस्ति तदभोज्यं भोजनानर्हम्। 'उपेतः स्त्रीणामनुपेतस्य चोच्छिष्टं वर्जयेत्' इति निषेधात्। तथाविधमपि कदाचिद्भुक्तं मया प्रमादात्। किंच मम कर्तुर्विज्ञानकोशस्य सिद्धान्ते तस्यैव कर्तृत्वाश्रयत्वाभिमानाद्वेत्यस्यार्थः। तथा च 'दुश्चरितम्' अपि 'यत्' अस्ति अपेयापानाखाद्याखादनागम्यागमनलक्षणं गर्हिताचरणं मत्कृतं यदस्तीत्यर्थः। दुष्टं चरितमितिविग्रहसामर्थ्याद्दुश्चरितपदस्यैतावानर्थो लभ्यते। तत्सर्वं परिहृत्येति शेषः। ततो 'मामापः पुनन्तु' इति। तथा 'असतां' शूद्रादीनां दुष्कर्मिणां वा संबन्धिनं

'प्रतिग्रहं' च पुनन्तु। 'अप्रतिग्राह्यं प्रतिगृह्य' इत्याश्वलायनसूत्रे दुष्टप्रतिग्रहकरणानन्तरं प्रायश्चित्तं कार्यमित्युक्तत्वात्। तदर्थमभिमन्त्रितमुदकं 'स्वाहा' मदीये वक्त्राग्नौ सुष्ठु हुतमस्तु। तेन सर्वं पाप्मानं भस्मी करोमीत्यर्थः। अत्र ग्रन्थान्तरे मन्त्रार्थः श्लोकरूपेण दर्शितः स लिख्यते—

'आपः पुनन्तु पृथिवीं पूता ताभिः पुनातु माम्।
पुनन्तु ब्रह्मणस्पतिर्वेदवेद्यः पुनात्विति॥
पूतमित्यत्र पूतेति ब्रह्म पूता पुनातु माम्।
यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम॥
सर्वस्मादंहसोऽस्मान्मामसतां च प्रतिग्रहात्।
पुनन्त्वाप इति ध्यात्वा स्वाहेत्युक्त्वा जलं पिबेत्' इति॥

मार्जनमन्त्रानाह—

दधिक्राव्णो॑ अका॒रिषं॒ जि॒ष्णोरश्व॑स्य वा॒जिनः॑।
सु॒र॒भि नो॒ मुखा॑ कर॒त्प्र ण॒ आयूꣳ॑षि तारिषत्।
(तै० सं० का० १ प्र० ५ अ० ११)

दधिक्राव्ण इत्यादि। दधीनि हवींषि काष्ठादीनि वा क्रामति गच्छतीति दधिक्रावा हविर्भुगग्निपुरुष इति यावत्। तस्य 'दधिक्राव्णः'। दधिक्राव्न् अस् इति स्थिते स्वरपूर्वव्यञ्जनस्य द्वित्वे प्राप्ते 'लवकारपूर्वस्पर्शश्च पौष्करसादेः' इति वकारपूर्वस्य स्पर्शस्य नकारस्य द्वित्वं विहितं प्रातिशाख्ये। तदनन्तरमेतेषामेकीकरणे दधिक्राव्ण्ण इति स्थितम्। भाषायां तु दधिक्राव्ण इति व्याकरणपारीणा भणन्ति। 'जिष्णोः' जयशीलस्य व्यापकस्य। अशू व्याप्तौ। अश्वरूपस्य वा। अग्निर्देवेभ्यो निलायत, अश्वो रूपं कृत्वेति स्थि(श्रु)तेः। वाजोऽन्नमस्यास्तीति वाजी तस्य 'वाजिनः'। 'अन्नं वै वाजः' इति श्रुतेः। सर्वेषां देवानां मध्ये तस्यैवान्नादत्वात्। अन्नसंपन्नस्येत्यर्थः। 'अग्निर्वा अकामयत। अन्नादो देवानाꣳ स्यामिति। स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत्। ततो वै सोऽन्नादो देवानामभवत्। अग्निर्वै देवानामन्नादः' इति श्रुतेः। वेगवतो वायुसखत्वादतिशीघ्रगामिन इत्यर्थः। ईदृशस्याग्नेरहम् 'अकारिषं' तस्य संबन्धं स्तोत्रं कुर्यां तस्य किंकरो भूयासमित्यर्थः। अकारिषमित्यत्र रेफस्योपरीकारश्छान्दसः। स चाग्निः 'नः' अस्माकं मुखानि, प्रत्ययलोपश्छान्दसः। अस्मत्सुकृतसमासादितसौरभ्याणि 'करत' करोतु। छान्द-

समेतत्। परिशुद्धानि कुर्यादित्यर्थः। किं चास्माकम् आयूंषि'। प्रश्नार्थे। तथ चाऽऽयूंषि च 'तारिषत्' वर्धयतु। प्रेत्युपसर्गस्य धातुना वा संबन्धः। तथा च प्रतारिषदिति सिध्यति। प्रकर्षेण संवर्धयत्विति विशेषः। निरुपपदोदीरित मायुष्यमस्मभ्यं दत्त्वाऽनुगृह्णात्विति भावः। 'लिङर्थे लेट्' इति विध्यादौ लेट् तस्य 'सिब्बहुलं लेटि' इति सिप्। 'लेटोऽडाटौ' इति विकल्पेनाडागमः। अ मन्त्रार्थे पुरातननिबद्धः श्लोको लिख्यते—

दधिक्रावा रविर्वह्निर्दधि क्रामति यज्जगत्।
जयव्याप्तिजवैर्योगाज्जिष्णोरश्वस्य वाजिनः॥
अकारिषं स्तुतिं कुर्यां तस्य संबन्धिनीं तथा।
सुरभीणि सुशुद्धानि मुखानि स करोतु नः॥
प्रतारिषत्प्रदद्याच्च पूर्णान्यायूंषि नः प्रभुः॥

अत्र दधिक्रावशब्दस्य सूर्यपरत्वे तु मन्त्रार्थस्त्वेवं व्याख्येयः—दधि क्राव्णो लोकयात्रानिर्वाहकस्य सूर्यस्य जिष्णोरश्वस्य व्यापकस्य वाजिनः वेगवतः। शेषं पूर्ववत्। मन्त्रान्ते मार्जनं कार्यं तथा शिष्टाचारात्। आ हिष्ठेति गतम्।

मार्जने मन्त्रान्तरमाह—

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः। अग्निं या गर्भं दधिरे विरूपास्ता न आपः शꣳ स्योना भवन्तु। (तै० सं० का० ५ प्र० ६ अ० १)

हिरण्यवर्णा इति। 'हिरण्यवर्णाः' सुवर्णच्छायास्ताम्रवर्णा इति यावत्। दिवेति शेषः। तथा च ब्राह्मणम्—'यद्वै दिवा भवत्यपो रात्रिं प्रविशति तस्मात्ताम्रा आपो दिवा ददृश्रे' इति। 'शुचयः' शुद्धाः सकलजगत्पावने समर्था इति यावत्। एतादृशा यास्तिष्ठन्ति। किंच 'यासु' अप्सु 'कश्यपः' प्रजापतिः। यद्वा पश्यतीति पश्यकः सूर्यः सर्वलोकसाक्षी। जगच्चक्षुरित्यभिधानात्। आद्यन्तवर्णविपर्यासश्छान्दसः। 'कश्यपः पश्यको भवति यत्सर्वं परिपश्यतीति सौक्ष्म्यात्' इति श्रुतेः। न (स) चाप्सु जात इति पौराणिकः (काः)। 'इन्द्रः' सुरेश्वरः। स चाप्सु 'जातः'। 'विरूपाः' नानारूपा 'याः'

(मार्जनमन्त्रार्थः)
आपः 'अग्निं' वडवाग्निं 'गर्भं' गर्भस्थजन्तुं 'दधिरे' कुक्षिस्थजन्तुत्वेन स्थापितवत्य इत्यर्थः । 'तृतीयमप्सु नृमणाः' इति श्रुतेः । 'ताः' एवंभूता 'आपो नः' अस्माकं 'शं' सुखहेतवः 'स्योनाः' अवैषयिकसुखजनिकाश्च 'भवन्तु' अथवा शं दुःखं शमयित्वेति शेषः । स्योनाः सुखकारिण्यो भवन्तु ।

मार्जने विनियुक्तं मन्त्रान्तरं तावदाह—

यासा॒ꣳ राजा॒ वरु॑णो॒ याति॒ मध्ये॑ सत्यानृ॒ते अ॑व॒पश्य॒ञ्जना॑नाम् । म॒धु॒श्चुत॒ः शुच॑यो॒ याः पा॑व॒कास्ता न॒ आप॒ः शꣳ स्यो॒ना भ॑वन्तु । (तै० सं० का० ५ प्र० ६ अ० १)

यासाꣳ राजेति । 'वरुणः' राजा यादसांपतिर्दण्डधर इत्यर्थः । 'जनानां सत्यानृते' पुण्यपापे 'अवपश्यन्' विवेचयन् 'यासाम्' अपां 'मध्ये' वसतीति शेषः । 'याति' गच्छत्ययं पुण्यकृदयं पापकृदिति पुण्यपापानुरूपमनुग्रहनिग्रहरूपव्यापारचिकीर्षया तत्र वसतीत्यर्थः । अपि च 'मधुश्चुतः' मधुस्यन्दिन्यो मधुस्राविण्य इति यावत् । 'शुचयः' पावका 'याः' तिष्ठन्ति 'ता आपः' । शिष्टं गतम् । यद्यपि हिरण्यवर्णाः शुचयः पावका इत्यत्र शुचिपावकपदे गृहीते इति पौनरुक्त्यं तथाऽप्यापा(प्याद)रात्पुनर्वचनम् । मन्त्रविषये पौनरुक्त्यमपि नास्ति । तदुक्तं भगवता भाष्यकारेण—ईशावास्यमन्त्रेषु जामिता नास्तीति पूर्वमन्त्रोक्त एवार्थः पुनरुच्यत इति ।

किं च—

यासां॑ दे॒वा दि॒वि कृ॒ण्वन्ति॑ भ॒क्षं या अ॒न्तरि॑क्षे ब॒हु॒धा भव॑न्ति । याः पृ॑थि॒वीं पय॑सो॒न्दन्ति॑ शु॒क्रास्ता न॒ आप॒ः शꣳ स्यो॒ना भ॑वन्तु । (तै० सं० का० ५ प्र० ६ अ० १)

यासां देवा इति । 'यासाम्' अपां 'भक्षं' भक्षणं, भक्षमाह्रियमाणमिति श्रौते दर्शनात् । 'देवा दिवि' द्युलोके मन्दाकिन्यामिति शेषः । 'कृण्वन्ति'

कुर्वन्ति। पूरणगुणेत्यादिना सुहितार्थे षष्ठी। द्युलोके या आपो देवानां भक्ष्यममृतरूपत्वादित्यर्थः।' याः ' च 'अन्तरिक्षे बहुधा' बहुप्रकारा ' भवन्ति सन्ति। भू सत्तायाम्।

' सर्वानुदारान्सलिलानन्तरिक्षे प्रतिष्ठितान् ' इति श्रुतेः। ' याः ' आपः ' पृथिवीं पयसा' वृष्ट्या 'उन्दन्ति' सकललोकानुग्रहार्थं पृथिवीं वर्षधारात्मना सिञ्चन्तीति भावः। ' शुक्राः ' शुभ्रा ' आपः ' इति। गतमन्यत्।

शिवेन॑ मा॒ चक्षु॑षा पश्यताऽऽपः शि॒वया॑ त॒नु-वोप॑स्पृशत॒ त्वचं॑ मे। सर्वा॑ꣳ अ॒ग्नीꣳर॑प्सु॒षदो॑ हुवे वो॒ मयि॒ वर्चो॒ बल॒मोजो॒ निध॑त्त (तै० सं० का० ५ प्र० ६ अ० १)

शिवेनेति। हे ' आपः शिवेन ' सुखस्वरूपेण। शिवं भद्रं कल्याणमिति कोशात्। ' चक्षुषा ' कटाक्षेण ' मा ' मां 'पश्यत'। 'मयि' निरन्तरं भूयसीं करुणादृष्टिं संपादयतेत्यर्थः। ' शिवया तनुवा ' कल्याणमूर्त्या ' मे त्वचमुपस्पृशत '। मदीयां त्वचमुपस्पर्शनेन परिपूतां कुरुतेत्यर्थः। इदानीमधिकारी स्वकृत्यमाभाषते—अग्नीनिति। हे आपो ' वः ' युष्माकमप्सु सीदन्ति तिष्ठन्तीति 'अप्सुषदः' जलस्थान्वाडवादीन् 'सर्वानग्नीन्' 'हुवे' आह्वयामि। किमर्थमित्यत आह—मयीति। 'मयि वर्चः' दीप्तिः 'बलं' शक्तिः 'ओजः' उत्साह एतत्सर्वं मयि ' निधत्त ' स्थापयत। मां वर्चस्विनं बलवन्तमोजस्विनं कुरुतेत्यर्थः। अग्नीनप्सुषद इति स्थिते 'अनितिपरो ग्रहोख्ययाज्यापृष्ठ्यहिरण्यवर्णियेष्वीकारोकारपूर्वो रेफमाकारपूर्वश्च यकारम् ' इति प्रातिशाख्यसूत्रम्। तत्र भाष्यकारः—एतेष्वीकारपूर्व ऊकारपूर्वो वाऽनितिपरो नकारो रेफभावमापद्यते। लुप्येते त्ववर्णपूर्वौ यवकाराविति यकारो लुप्यते। नकारस्य रेफोष्मयकारभावाल्लुप्ते च म(य)लोपाच्च पूर्वस्वरोऽनुनासिक इत्यकारस्यैकारस्य च सानुनासिकत्वमिति व्याचक्र इति सर्वं सुस्थम्। एवं मार्जनं विधाय पापपुरुषनिर्गमनाय दक्षिणकरे जलं निधाय नासिकाग्रं प्रापय्य वामभागे मेदिन्यां निक्षिप्य तज्जलं नावलोकयेत्। तदुक्तं वासिष्ठे—

गृहीत्वा पाणिना वारि स्वशाखोक्तामृचं जपेत्।
उद्धृत्य दक्षिणे हस्ते जलं गोकर्णवत्कृते॥

निधाय नासिकाग्रे तु पापपुरुषं च संस्मरेत् ।
बिभृयान्नासिकायां तु निरुद्धप्राणमारुतः ॥
वामे निक्षिप्य मेदिन्यां तज्जलं नावलोकयेत् ।

तत्र विनियुक्तं मन्त्रमाह—

**द्रुपदादिवेन्मुमुचानः । स्विन्नः स्नात्वी मलादिव । पूतं पवित्रेणेवाऽऽज्यम् । आपः शुन्धन्तु मैनसः । ( तै० ब्रा० का० २ प्र० ६ अ० ६ )**

द्रुपदादिति । माम् ‘ एनसो मुञ्चतु ’ । कर्मसाक्षी सूर्य इति शेषः । तत्र निदर्शनम्—‘ द्रुपदादिव ’। अपराधिनां पादकीलितकाष्ठं द्रुपदम् । चोरादीन्निरोद्धुं ग्राममध्ये दारुमयं पादकीलितं विधाय ग्रामस्वामिनः स्थापयन्तीति प्रसिद्धम् । तस्मादिवेत्यर्थः । यथा कृपालुः स्वामी तद्बन्धनादपराधिनं मोचयति तद्वदिति भावः । किंच—‘ आप एनसः ’ पापात् ‘ मा ’ मां ‘शुन्धन्तु’ शोधयन्तु । अस्मिन्नर्थे त्रयो दृष्टान्ताः कथ्यन्ते—‘ द्रुपदात् ’ पादकीलितकाष्ठात्, ‘इन्मुमुचानः’ मुक्त ‘इव’। ‘ स्विन्नः ’ स्वेदवान् ‘ स्नात्वी ’ स्नात्वा । ‘स्नात्व्यादयश्च’इति निपातनात्साधुः। ‘मलात्’ सर्वशरीरव्यापिपङ्कान्मुक्त ‘इव’। पुनात्यनेनाऽऽज्यादिकमिति पवित्रम्। ‘पुवः संज्ञायाम्’ इति करण इत्रप्रत्ययः । तेन ‘ पवित्रेण ’ समसाग्रदर्भरूपेण । ‘समौ साग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कुरुतः’ इति श्रौते दर्शनात् । ‘पवित्रं वै दर्भाः’ इति श्रुतेः। तेन ‘पूतं’ शोधितमाज्यस्थाल्यामाज्यं निरुप्येत्यारभ्योदगग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पूयेति शास्त्रविधिना संस्कृतम् ‘आज्यं’ सर्पिः ‘इव’ । एतत्सर्वं तत्तद्दोषादिनिर्मुक्तं सद्यथा परिशुद्धं भवति तथा मामापः सर्वस्मादेनसः शोधयन्त्विति तात्पर्यार्थः । अत्र कारिकाकारः—

अद्भ्यो जातौ कश्यपेन्द्रावग्निं वैद्युतवाडवम् ।
गर्भं या दधिरे नानारूपा स्थितिवशेन ताः ॥
शं दुःखं शमयित्वा नः स्योनाः सन्तु सुखप्रदाः ।
यासां मध्ये दण्डधरः पुण्यपापे विवेचयन् ॥
वरुणो याति मधुरस्यन्दिन्यः पूर्ववत्परम् ।
यासाममृतरूपाणां भक्षणं कुर्वतेऽमराः ॥

वृष्ट्यात्मना या बहुधा खे च या पृथिवीमपि ।
पयसा तद्गताकारैः सिञ्चन्तीति त्रिलोकगाः ॥
शुक्रा विशुद्धास्ता आपः शंनुदाः सन्तु शर्मदाः ।
आपः कल्याणदृष्ट्या मां पूतः स्या इति पश्यत ॥
तनुवा सौम्यया मूर्त्या स्पृशत त्वचं मामिकाम् ।
आह्वयाम्यप्सु वसतो वह्नीन्वो वाडवादिकान् ॥
आपो यूयं यशो वर्चो बलमोजो निधत्त वै ।

एतत्सर्वं संध्यात्रयेऽपि समानम् । जलप्राशनमन्त्रास्तु विशेषतो वर्णिताः । पूर्वमापो हि ष्ठेति नवभिर्मार्जनं पश्चादपि तथैव । इतरेषु मार्जनमन्त्रेषु सर्वमुक्त्वा ततः कर्तव्यं तदेव शिष्टाचारात् । प्रातःसंध्यामुपासिष्य इति प्रातः । माध्याह्निकसंध्यामुपासिष्य इति मध्याह्ने । सायंसंध्याविषये तु सम्यगधस्तात्संकल्पो निर्णीतः । अत्र विद्यारण्यस्वामिभिरुदाहृतं माधवीये—अथातः संध्योपास्तिविधिं व्याख्यास्यामस्तीर्थं गत्वा प्रयतोऽभिषिक्तः प्रक्षालितपाणिपादोऽप आचम्याग्निश्च मा मन्युश्चेति सायमपः पिबेत्सूर्यश्चेति प्रातः सावित्रेण सुरभिमत्याऽब्लिङ्गाभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरन्यैश्च पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवति । अथार्घ्यप्रदानं कर्तव्यम् । तद्विनियुक्तमन्त्रस्त्वनुपदमेव व्याख्यायते ।

माध्याह्निकसंध्यायामर्घ्यप्रदानविनियुक्तं मन्त्रमाह—

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् । ( तै० आ० प्र० १० अ० ४० )

हꣳस इति । हन्त्याहवनीयदेशेषु व्यापकतया गच्छतीति 'हꣳसः' परमात्मा । 'हंसो नाम सदाशिवः' इति वचनात् । स तु कीदृश इत्यपेक्षायामाह—शुचिषदिति । शुचौ देशेऽविमुक्तादिपुण्यक्षेत्रजाते सीदतीति 'शुचिषत्' । 'क्षेत्राणां पतये नमः' इत्यादौ तथा दर्शनात् । वसन्त्यस्मिञ्जगतीति 'वसुः' । वासयतीति वा वसुः । 'वासनाद्वासुदेवस्य वासितं ते जगत्त्रयम्' इति दर्शनात् । अन्तरिक्षे सीदतीति 'अन्तरिक्षसत्' । 'योऽन्तरिक्षे तिष्ठति' इति श्रुतेः । 'होता'

अग्निरूपेण देवानामाह्वाता । 'ऋषिर्होता निषसाद' इति श्रुतेः । यद्वा होता देवानामाह्वाता वह्निस्तद्रूप इत्यर्थः । 'अग्निं दूतं वृणीमहे' इति श्रुत्या वह्नेर्देवहोतृत्वावगमात् । वेद्यां भूलोकादौ व्यापकत्वेन सीदतीति 'वेदिषत्'। 'सा वा इयꣳ सर्वैव वेदिः' इतिश्रुतेः । वेद्यां परिष्कृतभूम्यां सीदति तिष्ठतीति वेदिषत् । 'वेदिः परिष्कृता भूमिः' इति कोशात् । 'वेदिर्वै परोऽन्तः पृथिव्याः' इतिश्रुत्या वेदिकायाः सर्वोत्कृष्टत्वावगमात् । तत्र परमात्माविर्भावो युक्त इति भावः । 'अतिथिः' अतिथिसदृशः । तल्लक्षणं तु स्वधर्मयुक्तं कुटुम्बिनमभ्यागच्छति , धर्मपुरस्कारो नान्नप्रयोजकः सोऽतिथिर्भवति । धर्मपुरस्कारः ऋत्वाद्यनुष्ठानं पुरस्कृत्य तत्सिद्ध्यर्थं याच्ञापर इत्यर्थः । केचिदभ्यागत इति वदन्तोऽभ्यागतः स्वयं विष्णुरिति वचनमुदाहरन्ति । तन्न । अभ्यागतस्यान्नमात्रार्थित्वात् । अतिथेस्तु वर्णितलक्षणलक्षितत्वेन तद्विलक्षणत्वात् । तस्मादतिथिशब्दस्य नान्नमात्रार्थ्यभ्यागतोऽर्थः किं तु वर्णित एवार्थः । नन्वभ्यागतपदमपि तथाविधार्थवाचकं नान्नमात्रार्थिवाचकमिति चेत् । ओं संज्ञाभेदेऽपि न तु संज्ञिभेद इति सारम् । दुरोणेषु गृहेषु सीदतीति 'दुरोणसत्' । अजस्रो दीदिहि नो दुरोण इति दुरोणशब्दस्य स्थानपरत्वदर्शनात् । ब्रह्माण्डाख्यगृहपतिरित्यर्थः । नृषु वैश्वानररूपेण सीदतीति 'नृषत्' । 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' इति स्मृतेः । वरे श्रेष्ठे तीर्थादौ सीदतीति 'वरसत्' । 'नमस्तीर्थ्याय च' इति श्रुतेः । यद्यपि शुचिषादित्यनेनैवायमर्थः सिद्धस्तथाऽप्यादरात्पुनर्वचनम् । मन्त्रेषु जामिता नास्तीति भावः । ऋते यज्ञे निष्पादकत्वेन सीदतीति 'ऋतसत्'। व्योमनि सूर्यात्मना सीदतीति 'व्योमसत्'। अप्सु जलेषु जायत इति 'अब्जाः'। 'योऽप्सु तिष्ठन्' इति श्रुतेः । 'जनसनखनक्रमगमो विट्' इति विट् । 'विड्वनोरनुनासिकस्याऽऽत्' इति नकारस्याऽऽदादेशः । गोष्वन्तर्यामित्वेन प्रादुर्भूतो 'गोजाः' । 'पशुपतये च' इति श्रुतेः । ऋते यज्ञे भोक्तृत्वेन जात 'ऋतजाः'। 'भोक्तारं यज्ञकर्मणः' इति स्मृतेः । अद्रिषु पर्वतेषु जात इति 'अद्रिजाः'। 'यः सर्वेषु भूतेषु तिष्ठन्' इति श्रुतेः । ईदृशः परमात्मा 'बृहत्' अधिकम् 'ऋतम्' उपासनात्मकं यज्ञं निष्पादयत्विति शेषः । अथ सजलेन पाणिना त्रिः प्रदक्षिणमनुव्रजनं कर्तव्यम् । 'यत्प्रदक्षिणं प्रक्रामन्ति तेन पाप्मानमवधून्वन्ति' इति श्रुतेः ।

'असावादित्यमन्त्रेण सोदकेनैव पाणिना ।
प्रदक्षिणमनुव्रज्य वाचयेत्संध्ययोर्द्वयोः' इति स्मृतेश्च ॥

संध्ययोरित्युपलक्षणम्। संध्यानामपीति ज्ञेयम्। तथा चैतच्च संध्यात्रयेऽपि समानं भवति तथैवाऽऽचारात्। तत्र विनियुक्तं मन्त्रमाह—

असावादित्यो ब्रह्म। (तै० आ० प्र० २ अ० २)

असाविति। 'असौ' इति पाणिना निर्देशः। 'आदित्यः' परमात्मा। उभयोरैक्यानुसंधानं संध्यावन्दनस्य प्रधानभूतं फलं भवति। 'असावादित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद' इति श्रुतेः। अत्रेदं रहस्यं प्रकाश्यते— कालत्रयेऽप्यर्घ्यदानं कर्तव्यम्। तत्र सायंप्रातःकालयोरर्घ्यत्रयं प्रकृतम्। मध्याह्ने त्वेकमर्घ्यं विहितम्। इदं च यथाकालमेव कर्तुं शक्यम्। काले त्वतिक्रान्ते प्रायश्चित्ततया प्राणायामोऽर्घ्यप्रक्षेपणं च कर्तव्यम्। उभयोः समुच्चयो न तु विकल्प इत्युक्तमधस्तात्। तत्रायं प्रयोगः—विधिवदाचम्य यथाशक्ति प्राणानायम्य मम सायंसंध्याकालातिक्रमणदोषपरिहारार्थं प्रायश्चित्तार्घ्यपूर्वकमर्घ्यदानं करिष्य इति संकल्प्य नूतनोदकेन सशिरस्कया सव्याहृतिकया गायत्र्या प्रायश्चित्तार्घ्यमेकं दद्यात्। एवं प्रातः। न चैवं प्रायश्चित्तकरणे प्रमाणाभावः। 'नियमातिक्रमे चान्यस्मिन्' इति सूत्रकारवचनात्। प्राणायामः प्रायश्चित्ततया कर्तव्यः। आचान्तो विधिवत्प्राणानायम्य चतुरर्घ्यकं कालातीतविशुद्ध्यर्थं दत्त्वा संध्यां समाचरेदिति। ततश्चतुरर्घ्यं देयमिति विवेकः। यथाकालमनुष्ठाने त्वेकैकः प्राणायामः कर्तव्यः। 'संध्यादावर्घ्यदाने च प्राणायामैक उच्यते' इति वचनात्। षट्कर्मचन्द्रिकायामुक्तम्—

'एवं संमार्जनं कृत्वा बहिःशुद्ध्यर्थकारणात्।
ततोऽभ्यन्तरशुद्ध्यर्थं प्राणायामं समाचरेत्' इति ॥

अत्रायं सिद्धार्थः—यथा कालातिपत्तौ संध्यावन्दनं क्रियते तथा प्रायश्चित्तार्घ्यमेकं दातव्यम्। तदनन्तरं त्रीण्यर्घ्याणि दातव्यानि। तत्र प्रायश्चित्तार्घ्यदानात्पूर्वमेकः प्राणायामः कार्यः। पुनः प्रधानार्घ्यदानेऽपि कर्तव्य इति चेन्न। एकं प्राणायाममेवाऽऽदाय प्रधानार्घ्यदानस्यापि प्राणायामपूर्वकत्वसिद्धेः। यथा पवमानप्रसर्पणेऽध्वर्युमुखाः प्रसञ्जिर इत्यत्रैकेनैवाध्वर्युणा सर्वेऽध्वर्युमुखा भवन्ति। यथाऽऽश्वलायनसूत्रे ब्रह्मयज्ञप्रकरण ओंपूर्वा व्याहृतय इत्येकप्रणवमादाय सर्वासां व्याहृतीनां नारायणाशयात्प्रणवपूर्वकत्वम्। यथोभयोरपि दर्शपूर्णमासयोरेकामन्वारम्भणीयामादाय तदारम्भपूर्वकत्वं तद्वत्प्रकृतेऽपीति न कोऽपि दोषः। न चोभयत्रापि प्राणायामानुष्ठानमस्तु बाधकाभावादिति वाच्यम्। तथात्वे बचनाभावात्। तत्कल्पनायामुपपत्तिविरो-

धाच्च । तथा हि प्रथमाचमनं कृत्वा प्राणानायम्य प्रायश्चित्तार्घ्यदानं करिष्य इति संकल्प्य तत उत्थायार्घ्यं दत्त्वा पुनरुपविश्याऽऽचम्य पुनः प्राणानायम्य प्रधानार्घ्याणि देयानीति वाच्यम् । न ह्यत्राविगीतशिष्टाचारो दृश्यते । तस्मादुपपत्तिविरुद्धोऽयं पक्ष इत्यस्मदुक्तमेव सम्यक् । तत्रायं प्रयोगः— वर्णितरीत्याऽऽचम्य यथाशक्ति प्राणानायम्य देशकालावनुकीर्त्य मम कालातिक्रमणदोषपरिहारार्थं प्रायश्चित्तार्घ्यदानपुरःसरमर्घ्यदानं करिष्य इति संकल्प्य जलं गृहीत्वोत्थाय तर्जन्यङ्गुष्ठयोरसंसर्गं यथा तथा प्रायश्चित्तार्घ्यं दत्त्वा सायं प्रातश्च त्रीणि त्रीण्यर्घ्याणि दद्यात् । अत्र स्मृतिवचनान्युदाह्रियन्ते—

'प्राङ्मुखः सततं विप्रः संध्यावन्दनमाचरेत् ।
अर्घ्यप्रक्षेपणं कुर्यादादित्याभिमुखो द्विजः' इति ॥

प्रातः प्रह्वः क्षिपेदप्सु मध्याह्ने ऋजुसंस्थितः ।
अर्घ्यप्रक्षेपणं कुर्यात्सायं तूपविशन्भुवि ॥
पाणिभ्यां जलमादाय गायत्र्या चाभिमन्त्रितम् ।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥
जले त्वर्घ्यं प्रदातव्यं जलाभावे तु तत्स्थले ।
संप्रोक्ष्य वारिणा सम्यक्पश्चादर्घ्यं यथाविधि ॥

अत्रापि प्रदातव्यमित्यन्वयः । इदं च वचनं प्रातर्माध्याह्निककालार्घ्यदानविषयम् । तदुक्तम्—

'उपविश्य तु सायाह्ने जले त्वर्घ्यं न निक्षिपेत् ।
निक्षिपेद्यदि मूढात्मा रौरवं नरकं व्रजेत्' इति ॥

सायमुपविश्य वारिणा संप्रोक्ष्य भूमावर्घ्यदानं कार्यं न जल इत्यर्थः । आश्वलायनशाखिभिरपि सायमुपविश्यैवार्घ्यदानं कार्यम् । तदुक्तं बह्वृचस्मृतिसंग्रहकारेण—'सायं तिष्ठतोऽर्घ्यविधानं शाखान्तरविषयम् । आश्वलायनस्तु सायमुपविश्यैवार्घ्यप्रक्षेपणं कुर्यात् । प्रक्षेपणानन्तरमुत्थायाद्भिरात्मानं परिषिच्य प्रदक्षिणीकृत्योपविश्याऽऽचामेत्' इति । मध्याह्ने तु यथाकालमेकमर्घ्यं देयम् । कालातिपत्तौ तु प्रायश्चित्तार्घ्यं दत्त्वा ततः प्रधानार्घ्यं देयमिति विवेकः ।

'मध्याह्ने चाञ्जलिक्षेपं सकृदेव समाचरेत्' इति वचनात् ।

न च मध्याह्ने प्रायश्चित्तार्घ्यानुत्थाने वचनाभावः शङ्कनीयः ।

'चातुरर्घ्यं तु गायत्र्या शिरोव्याहृतिसंयुतम् ।
कालातीतविशुद्ध्यर्थं त्रिसंध्यां तु समाचरेत्' ॥

इति वचनेन संध्यात्रयेऽपि तदनुष्ठानविधानात् । अत्रायं विशेषः—मध्याह्ने ब्रह्मयज्ञात्पूर्वमापस्तम्बीयानां संध्यानुष्ठानं कार्यम् । यथा प्रातरुपासनाद्यनुष्ठानानन्तरं ब्रह्मयज्ञः प्राप्नोति तथा माध्याह्निकसंध्यामकृत्वैव न कर्तव्यः । तथैव शिष्टाचारात् । स्मृतिकारैरङ्गीकाराच्च । आश्वलायनशाखिनां तु संध्यावन्दनात्प्रागेव ब्रह्मयज्ञः कर्तव्यः । ततो मध्याह्नसंध्येति निगर्वः । तदुक्तं स्मृतिसंग्रहकारेण—

'मध्याह्ने स्नानवेलायां स्नानवस्त्रं न पीडयेत् ।
पीडयेद्यदि मूढात्मा तत्स्नानं निष्फलं भवेत् ॥
तीरे निक्षिप्य तद्वस्त्रं ब्रह्मयज्ञमथाऽऽचरेत् ।
ततो माध्याह्निकीं संध्यां कुर्यादित्याश्वलायनः' इति ॥

शौनकः—'मध्याह्ने च पुनः स्नात्वा ब्रह्मयज्ञं समाचरेत् ।
ततो माध्याह्निकीं संध्यां कृत्वा च गृहमागतः' इति ।

तत्र मध्याह्नो मुख्यकालः । 'मध्यमा स्नानकर्मणि' इति वचनात् । मध्यमा माध्याह्निकी संध्या स्नानकर्मणि मध्याह्नकाल इत्यर्थः । तत्र गौणकालः* संध्या माध्याह्निकीष्यते । तर्जन्यङ्गुष्ठयोगेन नार्घ्यदानं कार्यमित्युक्तं स्मृत्यन्तरे—

'तर्जन्यङ्गुष्ठयोगेन राक्षसी मुद्रिका भवेत् ।
यो ददाति तया चार्घ्यं तत्तोयं रुधिरं भवेत्' इति ॥

एवमर्घ्यप्रदानं कृत्वा प्रदक्षिणमनुव्रज्याऽऽचामेत् । तदुक्तम्—

'मन्देहानां विनाशाय निक्षिपेत्तु जलाञ्जलीन् ।
प्रायश्चित्तार्थमाचम्य मुच्यते दैत्यहत्यया' इति ।

अथ संध्याङ्गतर्पणं कर्तव्यं शिष्टाचारात् । तदुक्तमाह्निके—

क्रमात्संध्यां च गायत्रीं ब्राह्मीं च निमृजीं तथा ।
तर्पयामीति वक्तव्यं चतस्रो देवताः प्रति ॥

अत्रायं प्रयोगः—आचम्य प्राणानायम्य मम दुरितक्षयार्थं परमेश्वरप्रीत्यर्थं सायंसंध्याङ्गत्वेन तर्पणं करिष्य इति संकल्प्य संध्यां तर्पयामि । सरस्वतीं तर्पयामि । वैष्णवीं तर्पयामि । निमृजीं तर्पयामीति सायं चतस्रो देवतास्तर्पयेत् । एवं प्रातः संकल्पं कृत्वा संध्यां तर्पयामि । गायत्रीं त० ब्राह्मीं त०

* अस्मात्पुरतः पादत्रयं तदधिकं वा त्रुटितम् ।

(सूतकादौ संध्याकर्मविचारः)

निमृजीं तर्पयामीति प्रातस्तर्पयेत् । एवं मध्याह्ने संकल्पं कृत्वा संध्यां तर्पयामि । सावित्रीं तर्पयामि । रौद्रीं तर्पयामि । निमृजीं तर्पयामीति तर्पयेत् । अत्रायं विशेषः—संध्यात्रयेऽप्यर्घ्यदानानन्तरं केचिदस्त्रोपसंहरणं कुर्वन्ति तत्तान्त्रिक-संध्याविषयं न तु वैदिकसंध्याविषयम् । प्रत्यक्षवेदे वेदमूलमन्वादिमहास्मृतिषु चास्त्रोपसंहरणस्यानुक्तत्वात् । तस्मादस्त्रोपसंहारादिकं न कर्तव्यमिति सर्वं रम-णीयम् । अत्रेदं तत्त्वं विचार्यते—आशौचादौ संध्यावन्दनमर्घ्यान्तमित्युक्तमध-स्तात् । स्मृत्यन्तरे विशेषः कथितः—

'संध्यामिष्टिं च होमं च यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वाऽपि त्यजन्गच्छत्यधोगतिम्' ॥

एतद्वचनं मानसिकसंध्यावन्दनाभिप्रायम् । तदुक्तं पुलस्त्येन—

'सूतके मृतके चैव संध्याकर्म न संत्यजेत् ।
मनसोच्चारयेन्मन्त्रान्प्राणायाममृते द्विजः' इति ॥

यत्त्वाशौचस्य कर्माधिकारपरिपन्थित्वादाशौचकाले नानुष्ठानं संभवतीति तदपि न । तात्कालिक्याः शुद्धेः संभवात् । गोभिलः—

'औपासने तु विप्राणामङ्गशुद्धिश्च जायते' इति ।

पराशरः—'अग्निहोत्रादिहोमार्थं शुद्धिस्तात्कालिकी स्मृता' इति ।

नन्वेवमप्याशौचादौ संध्याकर्म कर्तुं न शक्यते । तदयोग्यकालत्वात् । अत एव विष्णुपुराणेऽपि—

'सर्वकालमुपस्थानं संध्यायाः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः' इति ।

किंच सूतकादौ सत्यपि सामर्थ्ये संध्याकर्म न कार्यमित्याह मरीचिः—

'सूतके कर्मणां त्यागः संध्यादीनां विधीयते' इति ।

अत्र ब्रूमः—पूर्वोदाहृतपुलस्त्यबलेन तासां वाचामाचमनाद्यभिवादनान्त-कर्मरूपसंध्याकलापस्य सविशेषानुष्ठाननिषेधे तात्पर्यकल्पनात् । अत एव परा-शरमाधवीये—'प्राणायामं विना मानसिकमन्यत्कार्यम्' इत्युक्तम् । ननु व्याधितस्य कथमनुष्ठानप्रकारः । उच्यते—ज्वरितस्य यावदनुष्ठानाभावेऽप्य-दोषात् । स्वस्थस्यैव तन्नियमात् । तथाऽऽह याज्ञवल्क्यः—

'अनार्तश्चोत्सृजेद्यस्तु स विप्रः शूद्रसंमितः ।
प्रायश्चित्ती भवेच्चैव लोके भवति निन्दितः' इति ।

अत्रिरपि—'नोपतिष्ठन्ति ये(वै) संध्यां स्वस्थावस्थाश्च ये द्विजाः ।
हिंसन्ति ते(च) सदा ते वै भगवन्तं दिवाकरम्' इति ।

नन्वत्यार्तस्य का गतिः । कुशलैव । पित्रा भ्रात्रा वा स्वानुष्ठानं कारयित व्यम् । न तु सर्वात्मना लोपः । नित्यकर्मत्वात् । तदुक्तं स्मृत्यन्तरे—

उन्मत्तदोषयुक्तस्य व्याधियुक्तस्य नित्यशः* ।

ज्वरादिना यत्किंचिद्धतत्वे शुद्धमम्बरं धृत्वा वाग्यतः समासीनः स्वेष्टदे वतां ध्यात्वा विभूतिलेपनं कृत्वा तप्तवारिणा त्रिराचम्य यथाशक्ति संध्याका कुर्यात् । रुग्णस्य तप्तोदकाचमनं न निषिद्धमित्यापस्तम्बमुनिराह—'तप्ताभिश्च कारणात्' इति । कारणं ज्वरादिकमिति वृत्तिकारः । अत्यार्तश्चेत्पितरं भ्रात रमन्यं वा शिष्यादिकं समाहूय नाहमनुष्ठातुं शक्नोमि त्वमेवैतदाचरेति निर्दि शेत् । यजमानस्योपात्तदुरितक्षयार्थमिति संकल्पः । एतेनोन्मत्तो व्याख्यातः ।

इति श्रीमद्राघवदैवज्ञवंश्यश्रीकृष्णपण्डितविरचिते तैत्तिरीयसंध्याभाष्ये तृतीयो गुच्छः ॥३ ॥

---

## अथ चतुर्थो गुच्छः ।

---

अथ गायत्रीजपात्पूर्वमोमित्येकाक्षरं ब्रह्मेति गायत्रीहृदयं पठनीयम् तथाऽऽह शौनकः—

'ओमित्येकाक्षरं ब्रह्मेत्येतद्धृदयमुच्यते ।
गायत्र्यास्तत्पठित्वाऽऽदौ जपकर्म समाचरेत्' इति ॥

तदिदानीं व्याख्यायते—

**ओमित्येकाक्षरं ब्रह्म । अग्निर्देवता ब्रह्म इत्यार्षम् । गायत्रं छन्दं परमात्मं सरूपम् । सायुज्यं विनियोगम् । (तै० आ० प्र० १० अ० ३३)**

ओमित्येकाक्षरमिति । 'ओमित्येकाक्षरं ब्रह्म' परमात्मेति वाच्यवाच कयोरभेदः । एतत्सर्वं व्याहृतिव्याख्यानावसरे निरूपितमधस्तात् । ओमिति

---

* एतस्मात्पुरतः किंचित्त्रुटितमिति बोध्यम् ।

रूपनिष्पत्तिप्रकारोऽपि दर्शितः । विशेषस्तु भगवत्पादीयमतानुसारेण प्रपञ्च्यते । प्रपञ्चसारे मन्त्रसृष्टिप्रकरणे निर्दिष्टम्—

'योऽयं परमहंसाख्यो मन्त्रः सोऽहमितीरितः ।
सहोर्लोपेऽस्य पूर्वत्वे संधावोमिति जायते ॥
अकारश्च तथोकारो मकारश्चाव(त्र)वर्ण[काः]' इति ॥

योऽहं सोऽहमिति परमहंसाख्यो मन्त्रः । तस्य सकारहकारयोर्लोपे पूर्वसंधौ च कृत ओमिति रूपं जायत इति वाक्यार्थः । ब्रह्म ध्यायन्नेवोमित्येकाक्षरमिति जपेत् । तदाहुस्तत्रैव शंकरभगवत्पादीयाः—

'ओमित्येकाक्षरं ब्रह्म ध्यायन्नेव जपन्द्विजः ।
अवाप्तसर्वकामोऽसावात्मतत्त्वाय कल्पते' इति ॥

तस्य ऋष्यादिकं दर्शयति—अग्निर्देवतेति । तस्येति शेषः । 'अग्निः' अङ्गति सकलवेदान्तप्रतिपाद्यत्वं गच्छतीति व्युत्पत्त्याऽग्निशब्दस्य परमात्मपरत्वम् । अगिरगीतिदण्डधातुः । 'अङ्गेर्नलोपश्च' इत्यौणादिकसूत्रेण निप्रत्ययो नलोपश्च । 'यो देवानां नामधा' इति श्रुतेः । तस्य प्रणवस्याग्निः परमात्मा 'देवता' अधिदेवतेत्यर्थः । 'ब्रह्म' परब्रह्म 'आर्षम्' ऋषिः । 'गायत्रं छन्दं' गायत्री छन्दः । 'परमात्मं सरूपं' परमात्मा स्वरूपं तदभिव्यक्तियोग्यस्थानत्वादिति भावः । 'सायुज्यं विनियोगं' मोक्षे विनियोगः । इतिः प्रकारार्थे । तथा चैवंप्रकारेण प्रणवस्वरूपं जानीयादित्यर्थः । तदुक्तं शंकरभगवत्पादैः—

'प्रणवे ब्रह्मर्षिः प्रोक्तश्छन्दो गायत्रमुच्यते ।
परमात्मा देवताऽयं मोक्षादौ विनियुज्यते' इति ॥

अत एवाग्निपदस्य परमात्मपरत्वं व्याख्यातम् । अथ सकलदेववरां गायत्रीं प्रार्थयते—

आयांतु वरंदा देवी अक्षरं ब्रह्म संमितम् ।
गायत्रीं छन्दंसां मातेदं ब्रह्म जुषस्वं मे ।
यदह्नांत्कुरुंते पापं तदह्नांत्प्रतिमुच्यंते ।
यद्रात्रियांत्कुरुंते पापं तद्रात्रियांत्प्रतिमुच्यंते ।

सर्ववर्णे महादेवि संध्याविद्ये सरस्वति ।
( तै० आ० प्र० १० अ० ३४ )

आयात्विति । 'वरदा' उपासकानामभीष्टफलप्रदानशीला 'देवी' गायत्री नित्यानन्दसंपन्ना मातृकात्मिकेत्यन्ये । 'आयातु' अस्मदनुग्रहार्थमस्मत्सकाशमायात्वित्यर्थः । अथ तां स्तौति—अक्षरमिति । 'अक्षरं' क्षरणरहितं नित्यं 'संमितं' सम्यग्वेदान्तप्रमाणेन निश्चितं 'ब्रह्म' परमात्मा त्वमेवेति शेषः । अस्तु ततः किं तत्राऽऽह—गायत्रीमिति । 'छन्दसां माता' सर्वेषां वेदानां जननी, सकलवेदनिर्गलितसारभूतत्वादित्यर्थः । तदुक्तमापस्तम्बसूत्रे—'सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणम्' इति ।

तथाऽऽह मनुरपि—'त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः' इति ।

'गायत्रीं' गायत्रीछन्दोभिमानिनी देवतेत्यर्थः । प्रथमार्थे द्वितीयापाठश्छान्दसः । 'इदं' मत्कृतं स्तोत्ररूपं 'ब्रह्म' तपः । 'वेदस्तत्त्वं तपो ब्रह्म' इति वचनात् । 'जुषस्व' अनुगृहाण त्वमिति शेषः । जुषस्वेति लिङ्गात् । गायत्रि त्वमागत्य मामनुगृह्य मदाचरितं स्तोत्रं जुषस्वेति स्वकृतं भगवत्यै समर्पयतीति भावः । अथवा 'वरदा देव्यक्षरं' विनाशरहितं 'संमितं' सम्यग्वेदान्तप्रमाणेन निश्चितं 'ब्रह्म' जगत्कारणं परतत्त्वमुपदेष्टुमिति शेषः । 'आयातु' आगच्छतु । अस्माकं ब्रह्मतत्त्वं बोधयितुमागच्छत्वित्यर्थः । एतदेव स्पष्टयति—गायत्रीमिति । 'छन्दसां माता गायत्रीं' गायत्रीपदाभिधेया परदेवता 'मे' मम 'इदं ब्रह्म' वेदान्तप्रतिपाद्यं तत्त्वं 'जुषस्व' जोषयतूपदिशत्वित्यर्थः । जुषस्वेति च्छान्दसं रूपम् । तस्य फलमाह—यदह्नादिति । 'अह्नात्' अह्नि 'यत्पापं कुरुते' करोति 'तत्' पापम् 'अह्नात्' अह्नि 'प्रतिमुच्यते' उपासकपुरुषधौरेयेणेति शेषः । एतेन 'यद्रात्र्यात्' इति व्याख्यातम् । अथ गायत्र्याः सर्वात्मकत्वं दर्शयन्नेव सविशेषं प्रार्थयते—सर्ववर्ण इति । 'सर्ववर्णे महादेवि' इति गायत्र्याः संबोधनम् ।

ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि
देवानां धामनामाऽसि विश्वमसि विश्वायुः
सर्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि

सावित्रीमावाहयामि सरस्वतीमावाहयामि छन्दर्षीनावाहयामि श्रियमावाहयामि गायत्रिया गायत्री च्छन्दो विश्वामित्र ऋषिः सविता देवताऽग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयꣳ रुद्रः शिखा पृथिवी योनिः प्राणापानव्यानोदानसमाना सप्राणा श्वेतवर्णा सांख्यायनसगोत्रा गायत्री चतुर्विꣳशत्यक्षरा त्रिपदा षट्कुक्षिः पञ्चशीर्षोपनयने विनियोगः ।
(तै० आ० प्र० १० अ० ३५)

एतादृशे हे देवि त्वम् ‘ ओजोऽसि ’ इन्द्रियाणां शक्तिरसि, ‘ सहोऽसि’ शत्रूणामभिभवनशक्तिरसि, ‘ बलमसि ’ शरीरसामर्थ्यरूपाऽसि, ‘भ्राजोऽसि’ दीप्तिरूपाऽसि, ‘ देवानाम् ’ अग्नीन्द्रादीनां ‘ धाम ’ तेजो यदस्ति तन्नामा ‘ असि ’ तद्देवतानामैवेत्यर्थः । अथवा ‘देवानां धाम’ निवासभूमिः ‘ असि ’ भवसि । ‘ नाम ’ इति प्रसिद्धौ । सर्वदेवताश्रयभूमिर्भवसीत्यर्थः । ‘ विश्वं ’ सर्वजगद्रूपं त्वमेव ‘असि’। ‘विश्वायुः’ संपूर्णायुःस्वरूपाऽसि । एवं ‘सर्वमसि सर्वायुः’इत्युक्तानुवादः । यद्वा ‘विश्वं’ समस्तं स्थावरजातं भवसि। ‘विश्वायुः’ स्थावरजातस्याऽऽयुरपि त्वमेव भवसि । अत्राऽऽयुःशब्देन सत्ताकालो विवक्षितः । न तु मुखनासिकान्तर्वर्तिप्राणाख्यवायुसंचारः । तस्य चेतनधर्मत्वादिति ध्येयम् । ‘ सर्वं ’ निखिलजङ्गमजातं त्वम् ‘असि’ । सर्वस्य जङ्गमजातस्याऽऽयुः ‘ असि ’ प्राणधारणमसि । ‘ अभिभूः ’ निखिलस्य पापस्य तिरस्कारहेतुः । ‘ ॐ ’प्रणवप्रतिपाद्यपरमात्मरूपाऽसि । एतत्सर्वं सर्वात्मपरमेश्वरप्रतिपादकत्वाद्गायत्र्याः संभवतीति भावः । तादृशीं ‘ गायत्रीं ’ मदीये मनसि ‘ आवाहयामि ’ उपासितुमिति शेषः । एवं सावित्र्यादिरूपेण गायत्र्या आवाहनम् । अत्रैकस्या एव संध्यादेवतायाः कालभेदेन नामभेदाङ्गीकाराद्गायत्र्यादिभेदेनाऽऽवाहनमुक्तं पराशरमाधवीये—

‘ गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने ।
सरस्वती च सायाह्ने सैव संध्या त्रिधा मता’ इति ॥

नामत्रयस्य निर्वचनं कृतं ग्रन्थान्तरे—

गायत्री प्रोच्यते तस्माद्गायन्तं त्रायते यतः।
सवितृद्योतनात्सैव सावित्री परिकीर्तिता॥
जगतः प्रसवित्री वा वाग्रूपत्वात्सरस्वती।

छन्दांसि गायत्र्यादीन्यृषीन्विश्वामित्रादीन् 'आवाहयामि'। अयन्त्येतामिति श्रीर्लक्ष्मीस्ताम् 'आवाहयामि'। अथ गायत्र्याश्छन्दऋषिदेवतादिस्वरूपं दर्शयति—गायत्र्या इति। 'गायत्र्या गायत्री छन्दः'। शिष्टं स्पष्टम्। गायत्रीस्वरूपमाह—प्राणापानेति। पञ्चप्राणात्मिकेति कदम्बकार्थः। 'प्राणोऽपानः' इत्यमरवचनात्स्वरूपं वेदितव्यम्। देवदत्तकूर्मधनंजयनागकृकराः पञ्चोपप्राणास्तैर्युक्ता। तस्याः कीदृशा वर्णा इत्यपेक्षायामाह—श्वेतवर्णेति। इदमुपलक्षणम्। गायत्र्यादिभेदेन रक्तवर्णा कृष्णवर्णा चेत्यपि द्रष्टव्यम्। तदुक्तम्—

'गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका।
सरस्वती तथा कृष्णा उपास्या वर्णभेदतः' इति॥

सा किंगोत्रेत्यत आह—सांख्यायनेति। सांख्यायनो नाम कश्चिदृषिस्तेन समानं गोत्रं यस्याः सा 'सांख्यायनसगोत्रा'। गायत्रीपदं व्याख्यातम्। चतुरधिका विंशतिस्तावत्परिमितान्यक्षराणि वर्णा यस्याः सा 'चतुर्विंशत्यक्षरा'। 'संख्याया अल्पीयस्याः' इति चतुःशब्दस्य पूर्वनिपातः। त्रीणि पदानि यस्याः सा त्रिपदा। ङीबभावे यत्नः कार्यः। ऋग्यजुःसामवेदरूपपादत्रययुक्तेत्यर्थः। षट्कुक्षयो यस्याः सा 'षट्कुक्षिः'। प्राच्यादिदिक्चतुष्टयमूर्ध्वाधरे द्वे आहत्य षट्कुक्षिर्भवतीत्यर्थः। पञ्च शीर्षाणि यस्याः सा 'पञ्चशीर्षा'। व्याकरणं प्रथमं शिरः। शिक्षा द्वितीयम्। कल्पस्तृतीयम्। निरुक्तं चतुर्थम्। ज्योतिषामयनं पञ्चमम्। एतत्सर्वं गायत्रीहृदये प्रतिपादितमिति ध्येयम्। सा कुत्र विनियुज्यत इत्यत आह—उपनयन इति। उपनयनं नामाऽऽचार्यकर्तृको माणवकनिष्ठः श्रौतः संस्कारविशेषः। अस्मिन्विनियोग इत्यर्थः। अत्रेदमाकूतम्—तथाविधसंस्कारस्य गायत्र्युपदेशसाध्यत्वात्सा तत्र विनियुज्यते। मन्त्रार्थस्तु गायत्रीजपप्रसङ्गे सम्यगग्रे वक्ष्यते। अत्र केचिदुपनयनशब्दं निराहुः—उप समीपे नयनमुपनयनमिति। अपरे 'गर्भाष्टमे वर्षे वसन्ते ब्राह्मण आत्मानमुप मा नयस्वेति ब्रूयात्' इति बौधायनवचनमुदाहरन्त उपनेतारं प्रत्युपनेयस्य मामुपनयस्वेति प्रयोजनव्यापार उपनयनमित्युपनयनपदं व्याचक्रुः। अथ गायत्रीजपः कर्तव्यः। कथमिति चेदत्र शङ्कः—'कुशबृस्यां समासीनः कुशो-

त्तरायां वा कुशपवित्रपाणिः पश्चिमामुखः सूर्याभिमुखो वाऽक्षमालामादाय देवतां ध्यायन्गायत्रीजपं कुर्यात्' इति। जपात्पूर्वमाचमनं कार्यम्। तदाह मनुः—

'आचम्य प्रयतो नित्यमुभे संध्ये समाहितः ।
शुभे देशे जपञ्जप्यमुपासीत यथाविधि ' इति ॥

तत्राऽऽचमनं श्रौतं स्मार्तं वा कार्यमित्युक्तमधस्तात्। शङ्खवचने गायत्रीजपमित्यत्र प्रणवव्याहृतियुतां गायत्रीं जपेत्। उपनयनकाले तथोपदिष्टत्वादिति। नन्वेवं चेत्पच्छोऽर्धर्चश इत्यादिकमपि जपकाले भवेत्। उपनयनकाले तथोपदिष्टत्वादिति चेन्न। अग्रे तन्निरसिष्यते।

'प्रणवव्याहृतियुतां गायत्रीं वै जपेत्ततः'।

इति व्यासवचनाच्च प्रणवव्याहृतियुतां गायत्रीं जपेदिति गम्यते।

यत्तु—'ओंकारपूर्वमुच्चार्य भूर्भुवः स्वस्तथैव च ।
गायत्रीं प्रणवं चान्ते जप एवमुदाहृतः '॥

इति अन्त इत्यन्तप्रणवप्रतिपादकं योगयाज्ञवल्क्यवचनं तत्तु वानप्रस्थविषयकं, न ब्रह्मचारिगृहस्थविषयकम्। तथाचोक्तं चन्द्रिकायाम्—

'गृहस्थो ब्रह्मचारी च प्रणवाद्यामिमां जपेत् ।
अन्ते यः प्रणवं कुर्यान्नासौ वृद्धिमवाप्नुयात् ' इति ॥

तत्रैव—संपुटैव षडोंकारा गायत्री त्रिपदा मता ।
तत्रैकप्रणवा कार्या गृहस्थैर्जपकर्मणि ॥

तत्र त्रयाणां पक्षाणां मध्ये गायत्र्येकप्रणवा कार्या न तु प्रणवान्तसहितेति तात्पर्यम्। गृहस्थवद्बटोरपि जपः कर्तव्यः।

तथाऽऽह वसिष्ठः—

'गृहस्थवत्तु जप्तव्या सदैव ब्रह्मचारिभिः ' इति।

ननु कथंभूतेन गायत्रीजपः कर्तव्यः। उच्यते—सायमुपविश्य प्रत्यङ्मुखो जपमाचरेत्। प्रातःकाले तिष्ठन्प्राङ्मुख इति नियमः। तथाऽऽह मनुः—

'पूर्वां संध्यां जपेत्तिष्ठन्सावित्रीमाऽर्कदर्शनात् ।
पश्चिमां तु समासीनः सम्यगार्क्षविभावनात् ' इति ॥

पूर्वां संध्यां प्रातःसंध्यां पश्चिमां सायंसंध्यामित्यर्थः। अत्रेदं तत्त्वं निरूप्यते—तत्राऽऽर्कदर्शनादार्क्षविभावनादित्युभयत्राऽऽङ्वर्तते । तस्यावध्यर्थत्वं वाच्यम्। 'आङ्मर्यादाभिविध्योः' इति पाणिनिस्मरणात्। तत्र मर्यादाऽवधिरिति सूत्रार्थः। तथा च नक्षत्रसूर्ययोर्दर्शनं गायत्रीजपस्यैवावधि-

भवति न तु स्थानोपवेशयोः । गायत्रीजपस्यैव मुख्यतया वचनप्रतिपाद्यत्वात् । तेन गौणकाले संध्यानुष्ठानवेलायामपि जपस्याऽऽवश्यकत्वेन तत्रापि सायंकाल उपविश्यैव प्रातस्तिष्ठन्नेव जपेदिति गम्यते । तथा ग्रन्थान्तरे—

'प्राक्कूलेषु तथा स्थित्वा दर्भेषु सुसमाहितः ।
प्राणायामत्रयं कृत्वा ध्यायेत्संध्यामिति श्रुतिः ' इति ॥

इदं प्रातःसंध्याजपपरम् । संध्यां गायत्रीम् । नन्विदमनुपपन्नम् ।

'तिष्ठन्प्रातर्जपेद्देवीं ब्रह्मचारी समाहितः '।

इति विशेषवचनाद्वटोरेव तिष्ठतो गायत्रीजपः प्रातर्विहितः, न तु गृहस्थस्य लभ्यते, तस्मादिदं कथं वर्णितम् । अत्रोच्यते—भावानभिज्ञोऽसि । तत्र ब्रह्मचारिपदं न बटुपरं किं तु ब्रह्मध्यानपरम् । तदुक्तं श्रीपादैः—

'ब्रह्मभावे मनश्चारो ब्रह्मचर्यं प्रचक्षते ' इति ।

तेन सर्वोऽपि ब्रह्म ध्यायन्प्रातस्तिष्ठन्नेव कुर्यादित्यर्थः । वृषाकपिः—

'कन्यादानं च गोदानमुत्तराधारमेव च ।
प्रातःसंध्याजपं कुर्यात्तिष्ठन्नेव न संशयः ' इति ॥

संध्या गायत्रीत्यर्थः । नन्वेवमपि प्रातस्तिष्ठता जपः कर्तुं न शक्यते । संध्ययोर्बहिर्ग्रामादासनं वाग्यतश्चेति सूत्रकारेण संध्याद्वयेऽपि समुपवेशनस्यैव स्वीकृतत्वादिति चेत् । मा वोचः । तत्राऽऽसनपदस्य स्थानोपलक्षणत्वाङ्गीकारात् । अत एव वृत्तिकारः सिद्धान्तरहस्यमाह—अन्ये त्वासनग्रहणं स्थानस्योपलक्षणं, वाग्यतश्चेति लौकिक्या वाचो निवृत्तिः । न तु सावित्रीजपस्येति वर्णयन्तीति । न चान्यपदप्रयोगात्कथं सिद्धान्तः स्यादिति वाच्यम् । प्रातस्तिष्ठतैव जपः कार्यः ' सायं तूपविशतैव कार्य इति स्पष्टं निर्णयतां मन्वादिस्मृतिकाराणामाश्वलायनादिगृह्यकाराणां च पन्थानमवलोक्य वृत्तिस्थान्यशब्दस्य मुख्यकल्पपरत्वाङ्गीकारात् । आश्वलायनशाखिभिरपि सायमुपविश्यैव प्रातः स्थित्वैव जपः कर्तव्यः । तदाह भगवानाश्वलायनः—' वाग्यतः सायमासीन उत्तरावरमभिमुख्योऽस्पष्टमुपविश्य सावित्रीं जपेदधोस्तमितमण्डलमानक्षत्रदर्शनात्प्रातः प्राङ्मुखस्तिष्ठन्नादित्यमण्डलदर्शनात् ' इति । उत्तरावरमभिमुख्यो वायव्यभिमुख इति वृत्तिकारः । अत्र कारिकारत्ने—

'कुशासने समासीनो गायत्रीजपमाचरेत् ।
आतारकोदयात्सायमधोस्तमितभास्करात्' इति ।

भास्करेऽर्धास्तमितेऽर्घ्यदानानन्तरं कुशासने समुपविश्य वायव्यस्याष्टमो यो भाग उत्तरतस्तिष्ठति तदभिमुखो जपेदित्यर्थः । तदुक्तं विश्वामित्रसंहितायाम्—

'वायव्यस्याष्टमो भाग उत्तरो यस्तथाऽऽनने ।
समाहितो जपेद्देवीं कुशपाणिरतन्द्रितः' इति ।

तेन सूत्रमपि व्याख्यातम् । यद्यपि गृह्यकारमत आ तारकोदयादिति तारकोदयकालस्यैव जपावधित्वं प्रतीयते नतु दशादिसंख्यायास्तथाऽपि संख्याऽऽवश्यकी ।

'असंख्यातं तु यज्जप्तं तत्सर्वं स्यान्निरर्थकम्'

इति संख्याहीनस्य वैफल्यस्मरणात् । एवं तु संख्या त्वार्थिकी त्ववगम्यते । संकल्पस्तु तारकोदयपर्यन्तं जपं करिष्य इति । न तु दशवारमित्यादिप्रकारेण ।

यत्तु—'गृहस्थो ब्रह्मचारी वा शतमष्टोत्तरं जपेत् ।
वानप्रस्थो यतिश्चैव सहस्रादधिकं जपेत्' इति,

तत्तु गौणकालजपविषयमिति न कश्चिद्दोषः । अत्रेदं विचार्यते—

'जपकाले तु गायत्रीमुच्चरञ्जपमाचरेत् ।
संध्यासु भिन्नपादा चेत्स जपो निष्फलो भवेत्' इति ।

अत्र यथानिशान्तं यथाध्ययनमिति चन्द्रिकाकारः ।

ननु—'अच्छिन्नपादा गायत्री ब्रह्महत्यां प्रयच्छति ।
छिन्नपादा तु गायत्री ब्रह्महत्यां विनाशयेत्' ॥

इति वचनान्तराद्विच्छिन्नपादैव जप्तव्येति चेन्न । इदं हि वचनं गायत्रीकल्पाद्यागमशास्त्रानुरोधेन तच्छास्त्रोक्तदृष्टादृष्टफलसिद्धये प्रयोगं कुर्वतां गायत्रीमन्त्रोपासकानां विच्छिन्नपादा जप्तव्येति बोधयति, न तु वेदोक्तमार्गेण संध्यासु गायत्रीं जपतां तथेति । ननूपनयनकाले पच्छोऽर्धर्चशस्ततः सर्वामिति रीत्या गायत्रीमन्त्रस्योपदिष्टत्वात्तद्वदेव नित्यं जपः किं न स्यादिति चेन्न । तदा बटोर्ग्रहणासमर्थत्वेन तथोपदेशः कृत इदानीं तु न तद्युक्तम् । अत एव सुदर्शनाचार्यैरुक्तम्—तस्मै कुमाराय ग्रहणार्थं तत्सवितुर्वरेण्यमित्येतामृचमाचार्योऽन्वाहेति । अन्यथा व्याहृतीर्विहृताः पादादिष्वन्तेषु वा तथाऽर्धर्चयो(शो)हन्त मां(मा)कृत्स्नरयामित्यादिकमपि तत्कालविहितं प्रसक्तं स्यादविशेषात् । तस्माद्ग्रहणार्थमेवोपनयकाले तथोपदिष्टं न तु नियमार्थम् । अन्यथा ततः सर्वामिति सकलगायत्र्युपदेशो न स्यात् । तस्मादविच्छिन्नपादा सर्वा गायत्री जप्तव्येति सिद्धम् । तत्र पूर्वं जपमालिकया जपः कार्य इत्युक्तं तदभावेऽपि न क्षतिः । तस्य पर्वभिरपि कर्तुं शक्यत्वात । अत्र सहेतुकमाह व्यासः—

‘ पर्वभिस्तु जपेद्देवीमन्यत्रानियमः स्मृतः ।
गायत्र्या वेदबीजत्वाद्वेदः पर्वसु गीयते ’ इति ॥
आरभ्यानामिकायास्तु मध्यमे पर्वणि क्रमात् ।
तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु ॥
मध्यमाङ्गुलिमूले तु यत्पर्वद्वितयं भवेत् ।
तद्वै मेरुं विजानीयाज्जपे तन्नातिलङ्घयेत् ॥

मध्यमापर्वद्वयमनतिक्रम्यैव परावृत्य पुनरप्यनामिकामध्यमपर्वाऽऽरभ्य जपः कर्तव्य इत्यर्थः । पर्वभिरेव जपः कार्यो नाङ्गुलीभिरित्याह व्यासः—

‘ पर्वभिस्तु जपः कार्यो नाङ्गुलीनां निपातनैः ।
निपातनैस्तु यज्जप्तं तत्सर्वं राक्षसं भवेत् ’ इति ॥

अत्रायं विशेषः । आपस्तम्बशाखिनामयं प्रयोगः—आचम्य त्रिवारं प्राणानायम्य ममोपात्तदुरितक्षयार्थं गायत्रीजपं शतवारं सहस्रवारमपरिमितवारं करिष्य इत्यागूर्य जपेत् । आगूः संकल्पः । तदाह भगवानापस्तम्बः—‘ दर्भेष्वासीनो दर्भान्धारयमाणः सोदकेन पाणिना प्रत्यङ्मुखः सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा ’ इति । आश्वलायनानां नैवमिति प्रागुक्तम् । जपलक्षणमुक्तं ग्रन्थान्तरे—

‘प्रातर्नाभिसमं कुर्यान्मध्याह्ने हृदये तथा ।
सायाह्ने नासिकामूले जपलक्षणमीरितम्’ इति ॥

न च जपादौ संकल्पकरणे मानाभावः । ‘ श्रुतिस्मृतिप्रचोदितं करिष्यते यथा तथा यत्यसुरा(दा तु नाऽऽ)गुरं वदेत्तदाऽऽदितो जलं स्पृशेत् ’ इत्यस्यैव मानत्वात् । संकल्पाभावे कर्मवैफल्यं च स्मर्यते—

‘ न च श्राद्धं न तद्दानं न होमो न जपस्तदा ।
न प्राप्नोति फलं तस्य संकल्परहितं यदा ’ इति ॥

प्रदोषादिकाले जपनियममाह चन्द्रिकाकारः—

श्राद्धे प्रदोषे दर्शे च गायत्री दशसंख्यया ।
अष्टाविंशत्यनध्याये त्रयोदश्यां तु मानसम् ॥

श्राद्धे श्राद्धभोजनानन्तरम् । ननु तदानीं संध्याधिकार एव नास्ति । श्राद्धादिभोजनस्य कर्माधिकारपरिपन्थित्वादिति चेन्न । दशवारं गायत्र्याऽभिमन्त्रितं जलं पीत्वा कर्माधिकारी भवति । तदुक्तं लोकोपकारे—

'दशकृत्वः पिबेदापो गायत्र्या श्राद्धकृद्द्विजः ।
ततः संध्यामुपासीत जपेच्च जुहुयादपि' इति ॥

इदं सायंसंध्याविषयमिति ध्येयम् । यत्तु जपादौ न्यासमुद्रादिकं कुर्वन्ति तत्तूपासककर्तव्यमन्त्रसंध्याङ्गं न वैदिकसंध्याङ्गम् । गृह्येषु मन्वादिस्मृतिषु वाऽप्रतीतेः । हृदयादिषडङ्गन्यासाङ्गुलिन्यासध्यानादिकं त्वाचारानुसारेण कर्तव्यम् । एवं स्थिते गायत्रीमन्त्रो व्याख्यायते—ओमिति । ओंकारो व्याकृतः । व्याहृतयश्च व्याकृताः । प्रत्यग्ब्रह्मैक्यबोधिका शुद्धा गायत्री व्याख्यायते—तदिति । सा च त्रिपदा 'त्रिपदा गायत्री' इति श्रुतेः । चतुर्थपादः किमिति न पठ्यत इति चेन्न । अधिकाराभावात् । तथा हि उपनयनं नाम श्रुतिविहितसंस्कारः । सा च श्रुतिस्त्रिपदा गायत्री न तु चतुष्पदा । तथा च यावता मन्त्रेणोपनयनं विहितं तत्रैवोपनीतस्याधिकारो नान्यत्र । चतुर्थपादस्याथर्वणान्तःपातित्वेन तत्र पृथगुपनयनस्याऽऽवश्यकत्वात् । तदभावेनाथर्वणवेदान्तःपातिनि चतुर्थपादे नाधिकारोऽस्ति । तदुक्तमुज्ज्वलायाम्—अथर्वणस्य तु वेदस्य पृथगुपनयनं कर्तव्यम् । तथा ब्राह्मणम्—'नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीत' इति । तस्माच्चतुर्थपादपाठो नास्तीति सिद्धम् । मन्त्रार्थस्तु—दीव्यति उदयास्तंगमनाभ्यां लोकयात्रां प्रवर्तयन्देशान्तरं यातीति देवः । दिवु क्रीडादौ । पचाद्यच् । दीव्यति प्रकाशत इति वा देवः । द्युलोकवर्तित्वाद्वा देवः । ध्यातत्वाद्धृदयारविन्दमध्ये क्रीडतीति वा देवः । 'देवो द्युलोकवर्तित्वादेवनादेवनेन वा' इत्यभिधानात् । तस्य 'देवस्य' । 'तत्' इति षष्ठ्या परिणम्यते तस्येत्यर्थः । 'सुपां सुलुक्' इति पाणिनिस्मरणात् । सूते सकलजननिर्वृतिहेतुं वृष्टिमिति 'सवितुः' । 'ण्वुल्तृचौ' इति तृच् । 'याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति' इति श्रुतेः ।

'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति स्मृतेश्च ॥

यद्वा सौति सकलश्रेयांसि ध्यातॄणामिति सविता । 'उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुते' इति श्रुतेः । एवंविधस्याऽऽदित्यस्य भगवतः संबन्धि 'वरेण्यं' पुरुषार्थकामिभिर्वरणीयं श्रेष्ठं वा । तन्वादीनां विकल्पेनेयङुवङ्ङित्यनेनेयङादेशः । वरेण्यमित्यत्र वर्णचतुष्टयं परिज्ञेयं नतूच्चारणीयमिति वृद्धाः प्रवदन्ति । भर्जति तमस्काण्डं हन्तीति 'भर्गः' तेजः । 'अञ्च्यञ्जियुजिभृजिभ्यः कुश्च' इत्यौणादिकसूत्रेणासुन्प्र-

त्ययः कवर्गश्चान्तादेशः । सान्तमेतत् । शिवपरस्यैव भर्गशब्दस्यादन्तत्वं पुंस्त्वं च नार्थान्तरपरस्यापि तन्नियमः । 'महन्मेऽवोचो भर्गो मेऽवोचः' इति सोमसूत्रे तथा दर्शनादिति विवेकः । अत एवाऽऽर्यप्रणीतश्लोकोऽप्यस्ति—

'भर्गः सूर्यात्मकं हारि महसो वाचकत्वतः' इति ।

'धीमहि' ध्यायेमहि । प्रार्थनायां लिङ् । ध्यायतेः संप्रसारणं छान्दसम् । 'ध्यायेमहीतिशब्दोक्तौ धीमहीत्येतदुच्यते' इति पूर्वव्याख्यातृवचनात् । एते छात्रादिसहिता वयं सौरं तेजो ध्यायेमहीति पिण्डितार्थः । एतेन न बहुवचनानुपपत्तिः । ध्यानधारानैरन्तर्यविवक्षया वा बहुवचनोपपत्तिरिति द्रष्टव्यम् । तद्यदर्थं तदाह—धिय इति । 'यः' सविता 'धियः' । धिय इति द्वितीयाबहुवचनम् । 'प्रचोदयात्' प्रकर्षेण प्रेरयति सकलकर्मानुष्ठानप्रवणा दुष्कर्मविमुखाश्चास्मद्बुद्धीः करोति तस्य सवितुस्तेजो ध्यायेमहीति संबन्धः । प्रचोदयादिति लेट्पाठश्छान्दसः । एवम् 'उतैनं गोपा अदृशन्' इतिश्रुतिपर्यालोचनयाऽऽदित्यस्यापि शिवपरत्वाच्छिवपरत्वमुक्तम् । वस्तुतस्तु गायत्रीमन्त्रः साक्षाच्छिवपर एव । तथा हि—'सवितुर्देवस्य' सवितृरूपदेवस्येत्यर्थः । राहोः शिर इतिवदौपचारिकी षष्ठी । मण्डलान्तर्गतमिति शेषः ।

'मण्डलान्तर्गतं हिरण्मयं भ्राजमानवपुषं शुचिस्मितम् ।
चण्डदीधितिमखण्डविग्रहं चिन्तये मुनिसहस्रसेवितम्' इति श्रुतेः ॥

'वरेण्यं' श्रेष्ठं, शिवस्य ब्राह्मणदैवतत्वात् । तदिति द्वितीयया परिणमते । सुपां सुलुगित्यमृविभक्तेर्लोपः । तं सदाशिवं 'धीमहि' ध्यायेमहि । सदाशिवध्यानस्य पृथग्जनदुष्पापस्यैकेन कर्तुमशक्यत्वात्तदनुसंधानकुशलैः पुरुषपुण्डरीकैः सह कर्तुं शक्यत्वाद्बहुत्वोक्तिरिति ध्येयम् । तत्किमर्थमित्यत आह—धिय इति । 'यो भर्गः' शिवः पूर्वपादावस्थस्यापि भर्गशब्दस्यान्वयबलादनुषञ्जनं कार्यमिति विवेकः । 'नः' अस्मान् 'धियः' अज्ञानात् । धीशब्दोऽत्र व्यतिरेकलक्षणयाऽज्ञानपरः । धीरे कातरशब्दवत् । 'प्रचोदयात्' प्रकर्षेणाज्ञानपारं गमयेदिति प्रार्थ्यत इत्यर्थः । अस्मिन्नर्थे श्रुतिः—

'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षी तमसः परस्तात्' इति ।

तमसोऽज्ञानात्परस्तात्पारमिति श्रुत्यर्थः ।

सर्ववेदान्तसिद्धान्तमवलम्ब्य प्रकाश्यते ।
गायत्रीनिगमार्थोऽयं सदाचार्यप्रसादतः ॥

(गायत्र्यर्थः)

तदिति । दीव्यति नन्दतीति देवः । अखण्डानन्दैकरस इत्यर्थः । तदिति षष्ठ्या परिणम्यते । तस्य 'देवस्य' । सूते नानोपासनाफलानीति सविता । निर्विशेषस्यापि तत्तदाकारेणोपासितस्य तत्तत्फलजनकत्वाभ्युपगमात् । यद्वा सूते जगन्तीति सविता सकलजगदुपादानकारणमित्यर्थः । 'सविता प्रसवानामीशे । सविता प्रसवानामधिपतिः' इति वाक्याभ्यां सवितृशब्दस्योत्पत्त्यर्थकत्वात् । इदं च जगत्पालयितृत्वजगत्संहर्तृत्वयोरप्युपलक्षणम् । तथा च जगदुत्पत्तिस्थितिलयकारणत्वं लभ्यते । तदिति ब्रह्मवाचि षष्ठ्यन्तम् । सुपां सुलुगितिपाणिनिस्मरणात् । 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः । ब्राह्मणास्तेन' इति वचनेन तच्छब्दस्य ब्रह्मवाचकत्वात् । 'वरेण्यं' पुरुषार्थकामिभिरर्थ्यमानं श्रेष्ठं वा भर्गोऽविद्यादिदोषभर्जकं तेजः । 'वीर्यं वै भर्गः' इति श्रुतेः । वीर्यं तेज इति श्रुत्यर्थः । 'भर्गस्तेजोवचनः' इति वृद्धैः पूर्वं व्याख्यातत्वाच्च । अत्र प्राचीना भर्गो वृजिनभर्जनादिति भर्गपदं निराहुः । ब्रह्मणस्तेजोरूपत्वेऽप्येषोऽस्य परम आनन्द इतिवद्भेदव्यपदेश औपचारिक इति द्रष्टव्यम् । तथा चाद्वयानन्दलक्षणं सर्वजगदुपादानं परिपूर्णज्योतीरूपबिम्बस्थानीयं ब्रह्म वाक्यार्थतया पर्यवसन्नम् । एतादृग्ब्रह्म तद्रूपत्वेनेति शेषः । 'धीमहि' ध्यायेमहि । ननु कोऽसौ ब्रह्माभेदो विवक्षित इत्याशङ्क्य प्रत्यग्रूप इत्याह—धिय इति । 'यः' प्रत्यङ् 'नः' अस्माकं 'धियः' बुद्धीरन्तःकरणवृत्तीरित्यर्थः । 'प्रचोदयात्' प्रेरयति । अन्तःकरणवृत्त्यादिकं प्रकाशयतीति यावत् । तथा चान्तःकरणतद्धर्मावभासकसाक्षित्वेन पूर्वोक्तं ब्रह्म ध्यायेमहीति निर्गलितार्थः । वस्तुतस्तु पूर्वोक्तं ब्रह्म धीमहि सोऽहमिति प्रत्यग्लक्षणतया ध्यायेमहि । ननु न ब्रह्म प्रत्यग्लक्षणं प्रत्युत तद्विलक्षणमेव कर्तृत्वाद्यनाश्रयत्वादित्याशङ्क्य तस्य प्रत्यग्विलक्षणत्वमेवासिद्धमित्याह—धिय इति । 'यः' प्रत्यग्ब्रह्म, पुंस्त्वनिर्देशश्छान्दसः ।

'यःशब्दश्च यदित्यर्थे लिङ्गव्यत्ययतो भवेत्' ।

इति लौहित्यलीलकण्ठवचनात् । जीवात्मना प्रविश्य 'धियः' बुद्धीरन्तःकरणवृत्तीः 'प्रचोदयात्' प्रकाशयति । तथा च बिम्बस्थानीयं ब्रह्मैव साक्षिरूपमिति प्रत्यग्लक्षणध्यानमुपपन्नमिति न कश्चिद्दोषः । तस्मात्पक्षद्वयेऽपि प्रत्यग्ब्रह्मैक्यमेव पर्यवस्यतीति पूर्णब्रह्मैव गायत्रीमन्त्रार्थः ।

अथ गायत्रीमन्त्रार्थः श्लोकरूपेण विद्यारण्यस्वामिभिरुदाहृतः । ते श्लोका उदाह्रियन्ते—

तदित्यवाङ्मनोगम्यं ध्येयं यत्सूर्यमण्डले ।
सवितुः सकलोत्पत्तिस्थितिसंहारकारिणः ॥
वरेण्यमाश्रयणीयं यदाधारमिदं जगत् ।
भर्गः स्वसाक्षात्कारेणाविद्यातत्कार्यदाहकम् ॥
देवस्य द्योतमानस्य ह्यानन्दात्क्रीडतोऽपि वा ।
धीमह्यहं स एवेति तेनैवाभेदसिद्धये ॥
धियोऽन्तःकरणवृत्तीश्च प्रत्यक्प्रवणचारिणीः ।
य इत्यलिङ्गधर्मं यत्सत्यज्ञानादिलक्षणम् ॥
नोऽस्माकं बहुधाभ्यस्तभिन्नभेददृशां तथा ।
प्रचोदयात्प्रेरयतु प्रार्थनेयं विचार्यते(ताम्) ॥

अत्र लोकोपकारे जपलक्षणं निर्णीतम्—

तथा मध्याह्नसंध्यायामासीनः प्राङ्मुखो जपेत् ।
तिष्ठन्नपि जपेद्देवीमादित्याभिमुखो द्विजः ॥
कृत्वोत्तानौ करौ प्रातः सायं चाधोमुखौ करौ ।
मध्ये प्रसारितकरौ जप एवमुदाहृतः ॥

गायत्रीजपादौ करशुद्धिः कार्या । तल्लक्षणं तु—

'प्रकोष्ठे मणिबन्धे च पार्श्वयोस्तलयोस्तथा ।
तत्पृष्ठे च तदग्रे च करशुद्धिरुदाहृता' इति ॥

अथोपस्थानमन्त्रान्व्याख्यास्यामः । तत्र सायमिमं मे वरुणेत्युपस्थानमन्त्रः। मध्याह्न आ सत्येनेति । प्रातस्तु मित्रस्य चर्षणीधृत इत्यापस्तम्बशाखिनामिति विवेकः । तत्र वृद्धवसिष्ठः—

'प्राणायामैस्त्रिभिः पूतो गायत्रीजपमाचरेत् ।
तथोपतिष्ठेदादित्यमुदयन्तं समाहितः' इति ॥

चन्द्रिकायाम्—जपं कृत्वा विधानेन संध्योपासनमाचरेत् ।
उपस्थानं स्वकैर्मन्त्रैरादित्यस्य तु कारयेत् ॥

स्वकैः शाखापठितैस्तल्लिङ्गैर्मन्त्रैरित्यर्थः । सायंकाले वारुणीभिरथाऽऽदित्यमुपस्थाय प्रदक्षिणीकुर्वन्दिशो नमस्कुर्याद्दिगीशांश्च पृथक्पृथगिति । आश्वलायनशाखिनामयं विभागः । प्रातर्मैत्रीभिः सायं वारुणीभिरादित्यमुपतिष्ठेत तदुक्तमाश्वलायनस्मृतौ—

'अथोपतिष्ठेदादित्यमुदयन्तं समाहितः ।
मैत्रीभिर्वारुणेनास्तं गतं सूक्तेन बह्वृचः' इति ॥

यद्यपि गृह्ये नोक्तम्, तथाऽपि स्मृतौ तेनैवोक्तत्वात्कर्तव्यम्। गृह्य उपस्थानानुक्तिस्तन्मूलोत्सन्नशाखाया अभावात्। गृह्यस्योत्सन्नशाखामूलत्वमापस्तम्बीये दृश्यते—'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' इति। ननु स एवाऽऽश्वलायनः कथं स्मृतौ तन्निबबन्धेति चेन्न। अनुमेयवेदमूलस्मृतिषूपस्थानस्योक्तत्वादाश्वलायनेन स्मृतौ निबन्धनं कृतमिति न कश्चिद्दोषः। स्मृतेरयमर्थः—प्रातश्चतसृभिर्मित्रस्य चर्षणीधृत इत्यादिभिरादित्यमुपतिष्ठेत वारुणेन यच्चिद्धि ते विशो यथेति पञ्चर्चेन सूक्तेन सायमिति। सूत्रे—'मित्रस्य चर्षणीधृत इति चतस्रो मैत्र्यो यच्चिद्धि ते विशो यथेति पञ्चर्चं वारुणम्' इति। जपान्ते प्रातः सौरैर्मन्त्रैः सूर्यमुपतिष्ठेत सायं वारुणेन। यद्वोभयत्र जातवेदस इत्याश्वलायनशाखिनामुपस्थानमन्त्रः। [वस्तुतस्त्वयं पक्षोऽयुक्तः।] तस्य पूर्वोक्ताश्वलायनस्मृतिविरोधनाऽऽश्वलायनानभिमतत्वाद्वार्ह्याश्वलायनाचारविरोधाच्च। करालाश्व[ला]यनास्तु कालद्वयेऽपि जातवेदस इत्युपस्थानमाचरन्ति तद्गृह्याचारविरुद्धमित्युपेक्षणीयम्।

सायमुपस्थानमन्त्राक्षरार्थो व्याख्यायते—

इमं मे वरुण श्रुधी हवमद्या च मृडय।
त्वामवस्युराचके॥ (तै० सं० का० २ प्र० १ अ० ११)

इममिति। पुरा कश्चिच्छुनःशेपो नाम ऋषिः पशुत्वेन यूपे बद्धः संस्तद्बन्धविमोचनार्थं वरुणं प्रार्थयामास। तत्प्रार्थनाप्रकारश्चानेन मन्त्रेण द्योत्यते। तथा हि–हे 'वरुणेमं मे' मदीयं 'हवम्' आह्वानं 'श्रुधि' शृणु। 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' इति हेर्धिः। 'अन्येषामपि दृश्यते' इति दीर्घः। प्रार्थनारूपमाह्वानं शृण्विति भावः। किं तेन श्रवणेनेत्याशङ्कायामाह—अद्येति। 'अद्य' इदानीं, दीर्घश्छान्दसः। 'मृडय' बन्धनं परिहृत्य मां सुखिनं च कुर्वित्यर्थः। नन्वावयोः कः संबन्ध इत्यत आह—त्वामिति। 'त्वां' भवन्तम् 'अवस्युः' अवनमात्मन इच्छुः 'आचके' प्रार्थये।

इतोऽप्य[हं त्वां शरणं गतोऽ]स्मीत्याह—

तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरु-

शꣳस मा न आयुः प्रमोषीः ॥ ( तै० सं० का० २ प्र० १ अ० ११ )

तदिति । तस्मै, विभक्तिलोपश्छान्दसः । रक्षणायेत्यर्थः । 'ब्रह्मणा' स्तुत्यात्मना मन्त्रेण 'वन्दमानः' नमस्कारं कुर्वंस्त्वां 'यामि' प्रपद्ये । यतस्त्वं भक्तजनपरिपालको भवस्यतोऽहं त्वामेव रक्षितारं भजंस्तव शरणागतोऽस्मि । तेन मां मृडय । अन्यथा शरणागतपरित्यागो महादोषाय स्यादिति भावः । न केवलं ममैवैतदभिमतम् । अपि तर्हि यष्टुर्यजमानस्यापि तद्रक्षणमिष्यमाणमेवेत्याह—तदिति । 'यजमानः' यष्टा 'हविर्भिः' आज्यादिभिस्तदर्थं समर्पितैरित्यर्थः । करणैस्तद्रक्षणम् 'आशास्ते' प्रार्थयते । तस्माद्वश्यं सुखयेति भावः । विनयपूर्वकं स्वकृतं याचनं वरुणाय भगवते समर्पयते—अहेडमान इति । हे 'वरुण' त्वम् 'अहेडमानः' अनादरमकुर्वन्नक्रुध्यन्वा 'इह' अस्मिँल्लोके 'बोधि' मम याचनं बुध्यस्व । मत्कृतं याचनमनुगृहाणेत्यर्थः। फलितमर्थमाह—उरुशꣳसेति । हे 'उरुशꣳस' उरुभिर्मन्त्रैः शंसनीयस्तस्य संबोधनं हे उरुशंस । उरुकीर्ति मत्वा 'नः' अस्माकं, यजमानाद्यपेक्षया बहुत्वोक्तिः । अन्यथेमं मे वरुणेत्यत्रैकवचनप्रयोगादन्यत्र बहुवचनप्रयोगाच्चानन्वयप्रसङ्ग इति मन्तव्यम् । 'आयुः' जीवितं 'मा प्रमोषीः' मा प्रणाशय । अस्माकं वेदोक्तमायुष्यं देहीत्यर्थः ।

यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् । मिनीमसि द्यवि द्यवि । ( तै० सं० का० २ प्र० ४ अ० ११ )

यच्चिद्धि त इति । हे 'वरुण देव ते' त्वदीयं 'यच्चिद्व्रतं' यत्किंचिदपि कर्म 'द्यवि द्यवि' दिने दिने प्रकर्षेण 'मिनीमसि' तर्कयामः । 'इदन्तो मसि' इति मसिशब्दे परे तदन्त इकारः । तत्र दृष्टान्तः—विशो यथेति 'विशः' मनुष्या अज्ञानिनो 'यथा' तद्वदित्यर्थः । मदीयव्रतलोपनिमित्तकापराधं क्षमस्वेति वाक्यशेषः ।

यत्किंचेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि । अचित्ती यत्तव धर्मा युयोपिम मा

नस्तस्मादेनंसो देव रीरिषः । ( तै० सं० का० ३ प्र. ४ अ. ११ )

यत्किंचेति । हे ‘ वरुण दैव्ये ’ दिव्यलोके वर्तिनि ‘ जने ’ त्वयीत्यर्थः । ‘ यत्किं च ’ किंचित् ‘ इदमभिद्रोहं ’ स्वल्पमधिकं वा द्रोहम् ‘ अचित्ती ’ अचित्त्याऽज्ञानेन ‘ मनुष्याश्चरामसि ’ कुर्मः । किंच ‘ तव यत् ’ अपि ‘धर्मा’ धर्म दीर्घश्छान्दसः । त्वदीयं कर्म ‘ युयोपिम ’ विनाशयामः । हे ‘ देव तस्मादेनसः ’ द्रोहात् ‘ नः ’ अस्मान् ‘ मा रीरिषः ’ मा हिंसीः । धर्मलोपनिमित्तमेनः परिहृत्यास्मान्परिपालयेत्यर्थः ।

किंच—

कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म । सर्वा ता विष्य शिथिरेव देवाथा ते स्याम वरुण प्रियासः । ( तै० सं० का० ३ प्र. ४ अ. ११ )

‘ कितवासः ’ धूर्तसमानाः । ‘ आज्जसेरसुक् ’ इति जसेरसुगागमः । स्वार्थसाधनपरा ऋत्विजो ‘यत्’ कर्माङ्गं ‘रिरिपुः’ नाशितवन्तः । ‘न दीवि’ सम्यग्व्यवहृतौ न प्रावर्तन्तेत्यर्थः । यद्वेत्यव्ययद्वयं पक्षान्तरवाचि । घेति पादपूरणवाचको निपातः । यद्वाऽथवा यत्पापं ‘सत्यम्’ अवश्यं कृतमज्ञात्वैव कृतमित्यर्थः । (*यद्वाघमित्यन्वयः ।) उतापि च यद्धर्मस्वरूपं ‘न विद्म’ न जानीम इति यावत् । वर्णाश्रमचोदितस्य धर्मस्य तत्त्वं न जानीम इत्यर्थः । अस्तु ततः किं तत्राऽऽह—सर्वेति । ‘ सर्वा ’ सर्वाण्यृत्विग्भिर्नाशितं ज्ञात्वा कृतमज्ञानेन कृतं चेत्येवमस्माभिर्बहुधा कृतान्येनांसि सन्ति तानि सर्वाण्येनांसि ‘ विष्य ’ अस्मत्सकाशाद्विशेषेणापनीतानि कुरु विनाशयेत्यर्थः । एवमधिकपातकनिरासमाकाङ्क्ष्य क्षुद्रपापनिरासमाकाङ्क्षते—शिथिरेवेति । ‘ शिथिरेव ’ शिथिलानि । छान्दसमेतत् । यान्यन्यानि क्षुद्राणि पापानि तानि सर्वाणि विष्येत्यन्वयः । अथ भवत्कटाक्षानन्तरं हे ‘वरुण ते’ तव ‘प्रियासः’ प्रियाः ‘स्याम’ प्रिया भवेम । अत्रेदं प्रतिभाति—अयं मन्त्रः सूर्योपस्थाने विनियुक्तः । ननु वरुणलिङ्गान्मन्त्रस्य वरुणोपस्थान एव विनियोगः प्रतीयत इति चेत्सत्यम् ।

* धनुश्चिह्नान्तर्गतमधिकम् ।

तथाऽपि वारुणीभिरादित्यमुपस्थाय प्रदक्षिणमिति द्वितीयाश्रुत्या तल्लिङ्गं बाधित्वाऽऽदित्योपस्थान एव मन्त्रो विनियुज्यते न तु वरुणोपस्थाने। एतच्च सर्वं तृतीयाध्याये विचारितम् 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यत्र।

प्रातरुपस्थानमन्त्रमाह—

मित्रस्य॑ चर्षणीधृत॒ः श्रवो॑ दे॒वस्य॑ सान॒सिम्। स॒त्यं चि॒त्रश्र॑वस्तमम्॥ (तै० सं० का० ३ प्र० ४ अ० ११)

मित्रस्येति। अहरभिमान्यादित्यो मित्रः। चर्षणी प्रजा। 'कृषेरादेश्च चः' इत्यौणादिकसूत्रेणानिप्रत्यय आदेश्चकारश्च। तासां धर्ता चर्षणीधृत्, तस्य देवस्य। श्रूयत इति 'श्रवः'। 'सानसिं' सम्यग्भजनीयं 'सत्यम्' अविनाशि। चित्रमाश्चर्यं यथा तथाऽतिशयेन श्रूयत इति 'चित्रश्रवस्तमम्'। श्रोतृजनमनःसुखकरमित्यर्थः। एवंभूतं तस्य श्रवः स्तौमीति शेषः। अथवा 'चर्षणीधृतः' मनुष्याणां धारयितुः 'मित्रस्य देवस्य' मित्रनामकदेवस्येत्यर्थः। 'श्रवः' श्रोतुं योग्यं यशो महदस्तीति शेषः। 'सानसिं' फलदानशीलं 'सत्यं' सत्यवादिनं चित्रं श्रवः कीर्तिर्यस्यासौ चित्रश्रवा अतिशयेन तादृशं 'चित्रश्रवस्तमं' यजामह इति शेषः।

मित्रमेव पुनरपि स्तौति—

मि॒त्रो जनां॑न्यातयति प्रजा॒नन्मि॒त्रो दा॑धार पृथि॒वीमु॒त द्याम्। मि॒त्रः कृ॒ष्टीरनि॑मिषा॒ऽभिच॑ष्टे स॒त्याय॑ ह॒व्यं घृ॒तव॑द्विधेम। (तै० सं० का. ३ प्र. ४ अ. ११)

मित्रो जनानिति। अयं 'मित्रः प्रजानन्' तत्तदधिकारं विद्वान्सर्वान् 'जनान्यातयति' स्वे स्वे कर्मणि नियोजयति। किंच— 'मित्रः पृथिवीं दाधार' धृतवान्। 'उत' अपि च 'द्याम्'। किंच 'मित्रः' कृष्टीर्मनुष्यान् 'अनिमिषा' प्रबुद्धः सन्, यद्वा 'अनिमिषा' अनिमिषान्देवानित्यर्थः। विभक्तिलोपश्छान्दसः। 'अभिचष्टे' सर्वतः पश्यति सर्वं प्रकाश-

यतीत्यर्थः । 'सत्याय' अमोघफलाय सत्यात्मने वा तस्मै मित्राय 'हव्यं' चरुलक्षणं घृतवद्घृतयुक्तं 'विधेम' कुर्मः ।

प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ॥ (तै० सं. का. ३ प्र. ४ अ. ११)

प्र स मित्रेति । हे 'आदित्य यः' यजमानः 'ते' तव संबन्धिना 'व्रतेन' कर्मणा 'शिक्षति' अनुष्ठातुं शक्तो भवितुमिच्छति । हे 'मित्र स मर्तः' मनुष्यो यजमानः 'प्रयस्वान्' प्रकर्षेण धर्मफलयुक्तोऽस्तु । 'त्वोतः' त्वया-ऊतो रक्षितः स यजमानो 'न हन्यते' रोगादिना न पीड्यते 'न जीयते' वैरिभिर्नाभिभूयते । अपि च त्वया रक्षितम् 'एनं' यजमानम् 'अंहः' पाप्मा 'अन्तितः' समीपे 'नाश्नोति' नाऽऽप्नोति 'दूरात्' व्याप्नोति । महदनुग्रहशालिनं पुरुषं क्षुद्रोपद्रवा न स्पृशन्तीति भावः ।

मध्याह्न उपस्थानविनियुक्तं मन्त्रमाह—

आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेनाऽऽ देवो याति भुवना विपश्यन् ॥ (तै. सं. का. ३ प्र. ४ अ. ११)

आ सत्येनेति ।

'आ सत्येनेति मन्त्रस्य हिरण्य ऋषिरीरितः ।
त्रिष्टुप्छन्दश्च सविता देवता परिपठ्यते' ॥

आ सत्येनेत्यादि । 'सत्येन' लोकेन देवलोकेन 'रजसा' रजोलोकेन मनुष्यलोकेन 'आवर्तमानः' अयं 'सविता' सत्यलोकजनानाम् 'अमृतं' रजोलोकजनानां 'मर्त्यं च निवेशयन्हिरण्ययेन रथेनाऽऽयाति' आ समन्ताद्याति । किं कुर्वन् 'भुवना' भुवनानि 'विपश्यन्' विशेषेण पश्यन् । ईदृशं तं सवितारमुपतिष्ठ इति शेषः ।

उद्वयमित्यस्य विश्वामित्र ऋषिरनुष्टुप्छन्दः । परं ज्योतिर्देवता ।

उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ (तै० सं० का. ४ प्र. १ अ. ७)

उद्वयमित्यादि । 'वयं तमसस्परि' प्रपञ्चादुपरि स्थितं 'ज्योतिरुत्तरम्' उत्कृष्टतरं ज्योतिः 'उत्पश्यन्तो देवं देवत्रा' देवेषु स्थितं देवं 'सूर्यं ज्योतिरुत्तमम्' उत्कृष्टतमं ज्योतीरूपं सूर्यम् 'अगन्म' प्राप्नवाम मुक्तय इति शेषः ।

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ (तै. सं. का. १ प्र. ४ अ० ४३)

उदु त्यमित्यादि । उच्छब्दः पादपूरणे । 'उदु त्यम्' अमुं 'जातवेदसं देवं वहन्ति' उद्गमयन्ति 'केतवः' रश्मयो 'दृशे विश्वाय' सर्वप्राणिनां विश्वस्मै दर्शनाय । कं प्रति, 'सूर्यम्' अमुं जातवेदसं सूर्यं प्रत्युद्गमयन्ति रश्मय इत्यर्थः । तथैवार्थवादे श्रूयते—'उद्यन्तं वावाऽऽदित्यमग्निरनुसमारोहति' इति ।

चित्रं देवानामित्यादेः कुत्स ऋषिः । त्रिष्टुप्छन्दः । सूर्यो देवता । तमेव सूर्यं स्तौति—

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च । (तै० सं० का० १ प्र० ४ अ० ४३)

चित्रं देवानामित्यादि । 'देवानां' दैत्यहनने 'चित्रमनीकम्' अग्निमं बलम् । 'उदगात्' उदैत् । कीदृशमनीकं 'चक्षुर्मित्रस्य वरुणस्याग्नेः' । अहरभिमानी देवो मित्रो रात्र्यभिमानी वरुण उभयोरभिमान्यग्निस्तेषां मित्रस्य

वरुणस्याग्नेश्चक्षुरात्मकं प्रकाशकं तदनीकं स सूर्य उदगात् । किंच—आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य इति । स 'सूर्यः' भानुभिर्दिवं च पृथिवीं चान्तरिक्षं च लोकत्रयम् । 'आप्राः' समन्तादमूः पूरितवान् । अपि च 'आत्मा जगतस्तस्थुषः' स्थिरस्यास्य चराचरात्मकस्य सर्वस्य 'जगत आत्मा' भवत्यसौ सूर्यः । मदभीष्टसिद्ध्यर्थमेनमहमुपतिष्ठ इति शेषः ।

तच्चक्षुरित्याद्युपस्थानमन्त्रस्य वसिष्ठ ऋषिरनुष्टुप्छन्दो भास्करो देवता । तदेवोद्यत्सूर्यसंज्ञकं ब्रह्म स्तौति—

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम
शरदः शतं जीवेम शरदः शतं नन्दाम शरदः
शतं मोदाम शरदः शतं भवाम शरदः शतꣳ
शृणवाम शरदः शतं प्रब्रवाम शरदः शतम-
जीताः स्याम शरदः शतं ज्योक्च सूर्यं दृशे ।
( तै. आ. प्र. ४ अ. ४२ )

तच्चक्षुरित्यादि । 'तत्' सर्वस्य जगतश्चक्षुर्भूतं देवानां हितं 'देवहितं पुरस्तात्' पूर्वस्यां दिशि 'शुक्रं' शुद्धस्वरूपम् । 'उच्चरत्' उद्यत्सूर्यात्मकं ब्रह्म 'शरदः शतं' शतं वत्सरान्वयमायुरारोग्यैश्वर्यकामिनः 'पश्येम' तिष्ठेम । तथा 'शरदः शतं जीवेम' । तथा 'शरदः शतं नन्दाम' पुत्रपौत्र-धनादिभिः समृद्धाः स्याम । तथा 'मोदाम' हृष्टाः स्याम, 'भवाम' अभिवृद्धतमाः स्याम, 'शृणवाम' प्रियवचनान्येव शृणवाम, 'प्रब्रवाम' प्रकृष्ट-वचनवक्तारः स्याम, पुरुषायुषवन्तोऽपि 'अजिताः स्याम' । तथा 'ज्योक्च सूर्यं दृशे' चिरकालं सूर्यात्मकं ब्रह्म द्रष्टुमाशास्महे ।

य उदगान्महतोऽर्णवाद्विभ्राजमानः सरिरस्य
मध्यात्स मा वृषभो लोहिताक्षः सूर्यो विप-
श्चिन्मनसा पुनातु । ( तै. आ. प्र. ४
अ. ४२ )

य उदगादिति । 'यो महतः' समुद्रादुपरि 'उदगात्' उद्यन्दृश्यते । 'सरिरस्य' सलिलस्य मध्ये 'विभ्राजमानः' दीप्यमानो 'विपश्चित्' विद्वान् 'सूर्यो वृषभः' वर्षयिता धनानां 'लोहिताक्षः' लोहितकिरणः 'सः' सूर्यो 'मा' मां 'मनसा' आदरेण 'पुनातु' अनुगृह्णातु रक्षतु ।

अथ संध्यात्रयेऽपि प्राच्यादिदिग्वन्दनं तदधिदेवतेन्द्रादिवन्दनं च कर्तव्यम् । तदुक्तम्—"कुर्वन्दिशो नमस्कुर्यादिगीशांश्च पृथक्पृथक्" ।

नमः प्राच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमो दक्षिणायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमः प्रतीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम उदीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम ऊर्ध्वायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमोऽधरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमोऽवान्तरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमो गङ्गायमुनयोर्मध्ये ये वसन्ति ते मे प्रसन्नात्मानश्चिरं जीवितं वर्धयन्ति नमो गङ्गायमुनयोर्मुनिभ्यश्च नमो नमो गङ्गायमुनयोर्मुनिभ्यश्च नमः । (तै. आ. प्र. २ अ. २.)

तत्र मन्त्रेषु नमः प्राच्यै दिश इत्यादि ।

तदुक्तं कश्यपेन—'दिग्देवता नमस्कारमन्त्रोऽयं संध्ययोर्भवेत्' ।

मन्त्रार्थस्तु—'प्राच्यै दिशे नमः' अस्तु । 'नमः स्वस्ति' इति चतुर्थी । 'एतस्यां दिशि याश्च देवताः' इन्द्रादयः 'प्रतिवसन्ति' तिष्ठन्ति 'एताभ्यश्च नमः' अस्तु । नमस्कारादि नमस्कारान्तमेकं यजुरिति केचिन्नैरुक्ताः । नमस्काराद्येकं यजुः । नमस्कारान्तमेकमिति यास्कः । अत्र नमःशब्दः पूर्वः पूर्वेणान्वेति उत्तर उत्तरेणान्वेतीति । एवं सर्वत्र योज्यम् ।

कामोऽकार्षीन्नमो नमः । ( तै० आ० प्र० १० अ० ६१ )

मन्युरकार्षीन्नमो नमः । ( तै. आ. प्र. १ अ. ६२ )

'कामः' कामाभिमानी देवः 'अकार्षीत्' स एव करोतीति । 'नाहं करोमि कामः कर्ता नाहं कर्ता' इति श्रुतेः । 'कुर्वन्नपि न लिप्यते' इति स्मृतेश्च । 'मन्युः' तदभिमानी देवः । अन्यद्गतम् । तस्मै कामाय मन्यवे च नमोऽस्त्वित्यर्थः ।

*या पृथिवी या आपो यत्तेजो यो वायुर्यदाकाशम् । पञ्चमीपाठश्छान्दसः । तेभ्यः पञ्चभूतेभ्यो नमोऽस्त्वित्यन्वयः । अथ वासुदेवाय नमः । ॐ नमो भगवते वासुदेवाय । समर्पयति—ओं नम इति । ओंकारवाच्याय भगवत ऐश्वर्यादिसंपन्नायेत्यर्थः । तदुक्तमाचार्यैः—

'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इति ॥

वसुदेवस्यापत्यमिति वासुदेवः । यद्वा वसन्त्यस्मिन्भूतानीति वासुः । स चासौ देवश्चेति विग्रहः । तस्मै नम इत्यर्थः ।

अथ संध्यारूपां परदेवतां प्रार्थयते—

याꣳ सदा सर्वभूतानि स्थावराणि चराणि च ।

---

* एतन्मूलं मृग्यम् ।

सायं प्रातर्नमस्यन्ति सा मा संध्या अभिरक्षत्वों नमः ॥

यामिति । सर्वाणि भूतानि ' यां नमस्यन्ति सा संध्या मा ' माम् ' अभिरक्षतु ' इत्यन्वयः । अत्रेदं तत्त्वं विचार्यते—सायं प्रातरितिविशेषोपादानात्संध्ये उभे एव न तु तिस्रः । अत एवाऽऽपस्तम्बसूत्रेऽपि संध्ययोर्बहिर्ग्रामादासनमित्यत्र द्विवचनमुपात्तम् । आश्वलायनसूत्रेऽपि यज्ञोपवीती नित्योदकः संध्यामुपासीतेत्यारभ्यैवं प्रातः प्राङ्मुख इत्युभयोरेव संध्ययोरुपादानं कृतम् । माध्याह्निकी तु स्मृतिवचोभ्यः समागता न तु गृह्यकारवचोभ्यः । अत्रेदमपि ज्ञापकम्, यद्धर्मज्ञाः प्रमादादिना कदाचिन्माध्याह्निकीं संध्यामकृत्वैव भोजने कृतेऽपि न दोष इति वर्णयन्ति । शिवायेत्यारभ्योत्तमे शिखर इत्यन्तं पुराणश्लोकाः स्पष्टार्थाः ।

उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि ।
ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम् ।
( तै० आ० प्र० १० अ० ३६ )

उत्तमे शिखर इति जपादूर्ध्वं गायत्रीप्रस्थापनमन्त्रः । तत्पर्यन्तमेव संध्याकर्मेति रहस्यम् । 'देवीप्रस्थापनान्तं स्यात्संध्याकर्म मुनीरितम्' इति स्मृतेश्च ।

तस्यायमर्थः—' भूम्याम् ' अवस्थितो यः पर्वतो मेरुनामकस्तस्य मूर्धन्युपरिभागे ' जाते ' विद्यमान ' उत्तमे ' श्रेष्ठे 'शिखरे' उत्कृष्टशिखराकारमन्दिर इत्यर्थः । स्थातुमिति शेषः । ' ब्राह्मणेभ्यः ' निरन्तरमुपासकेभ्यो द्विजोत्तमेभ्यः ' अभ्यनुज्ञाता ' हे 'देवि' हे भगवति ' यथासुखं गच्छ ' अस्मानुपासकाननुगृहीत्वा(ह्य) यथाकामं यथागतं गच्छेत्यर्थः । शिष्टं स्पष्टम् ।

अथ स्वरक्षणार्थं द्यावापृथिव्यौ प्रस्तौति—

इदं द्यावापृथिवी सत्यमस्तु । पितर्मातर्यदिहोपब्रुवे वाम् । भूतं देवानामवमे अवोभिः । विद्यामेषं वृजनं जीरदानुम् । (तै० ब्रा० का० २ प्र० ८ अ० ४)

(द्यावापृथिविस्तुतिमन्त्रार्थः)

इदमिति । हे ‘ पितः ’ हे द्युलोक हे ‘ मातः ’ हे पृथिवि ‘ इयं वै माता । असौ पिता । द्यौः पिता पृथिवी माता ’ इति श्रुतेः । ‘ वां ’ युवां प्रति ‘ इह ’ कर्मणि ‘ यत् ’ वचनम् ‘उपब्रुवे’ ब्रवीमि । हे ‘द्यावापृथिवी’ हे द्यावापृथिव्यौ । द्विवचनाभावश्छान्दसः । ‘ इदं ’ मदीयं वचनं ‘ सत्य- मस्तु ’ । किं तद्वचनमित्यपेक्षायामाह—भूतमिति । ‘अवोभिः’ अस्मदीयरक्षणैः सह सर्वेषां ‘ देवानां ’ सुराणाम् । इदमुपलक्षणम् । सर्वेषां भूतानामिति ज्ञेयम् । ‘ अवमे ’ रक्षके । युवामिति शेषः । ‘ भूतं ’ भवतम् । अस्मदादे- र्देवानां च संरक्षके भवतमिति यद्वचनमिदं सत्यमस्त्वित्यन्वयः । वयमपि भव- त्प्रसादात् ‘ इषम् ’ अन्नं ‘ वृजनं ’ तापवर्जितं ‘जीरदानुं’ जीवनस्य दातारं ‘ विद्याम ’ लभेम । विद्लृ लाभे । स्वयं तापवर्जितं भोक्तुस्तापनिवर्हकं च जीवनोपायं च यदन्नं तदन्नं लभेमहीत्यर्थः ।

इदं ततः परमाकाशादित्यादिश्लोकः स्पष्टार्थः । इदानीं संध्याकर्मसाद्गुण्यार्थं सर्वजनपदवर्तिगोब्राह्मणेभ्यः शुभं प्रार्थयन्प्रवरान्वितस्वनामकीर्तनपुरःसरं भगवतीं परां देवतां प्रणमति—चतुःसागरपर्यन्तमिति । वाक्यार्थः स्पष्ट एव । अत्र सागराणां चतुष्टयसंख्या [ सप्तसंख्या ]या अप्युपलक्षिका । तथा च सप्तसागरमध्ये या गावो ये च ब्राह्मणाः सन्ति ताभ्यस्तेभ्यश्च शुभं भूया- दिति वाक्यार्थः पर्यवस्यतीति वर्णयन्ति । अपरे तु मुख्यार्थमेवावलम्ब्य वर्ण- यन्ति । अत्र शुभपदस्य स्वस्तिवचनत्वात्तद्योगे नमः स्वस्तीत्यादिना चतुर्थी । अन्ये तु शुभपदस्य हितार्थवाचित्वात्तद्योगे चेति सूत्रेण( वार्तिकेन) चतुर्थीति वर्णयन्ति । भो इति पदं न रूपवचनम् । तथा च ‘ भोः ’ हे भगवति वाग्देवि संध्ये त्वामिति शेषः । ‘अभिवादये’ नमस्कुर्वे इति केचिद्व्याचक्रुः । ते त्वत्यन्तं विस्मृतपूर्ववाचः । तथा हि—उत्तमे शिखर इत्यत्रैव भगवती प्रस्थापिता । तथा च क्वेदमभिवादनं विनियुक्तं स्यात्तावत्पर्यन्तमे(त्वादे) व संध्याकर्म- कलापस्य । किंच ते त्वनधीतस्मृतिवचनाः । तथा हि—‘ आत्मपादौ नम- स्कृत्वा गोत्रप्रवरपूर्वकम् ’ इति । नमस्कृत्वा स्पृष्ट्वेत्यर्थः । आत्मपादौ तथा भूमिं स्पृष्ट्वेति वचनात् ।

‘ नक्षत्रं च तथा सूर्यं द्विजानप्यभिवादयेत् ।
कनिष्ठानपि वेदज्ञान्संध्याकालेऽभिवादयेत् ॥
विना पुत्रं च शिष्यं च दौहित्रं दुहितुः पतिम् ’ ।

इति वचोभिः संध्यादेवताभिवादनस्यानुक्तत्वाद्द्विजाद्यभिवादनस्यैवोक्त-

त्वाच्च तदभिवादनं प्रस्तुतवाक्यार्थः । न तु संध्याया गरीयस्या अभिवादनमस्तीति ।

श्रीमद्राघवदैवज्ञवंश्यः श्रीकृष्णपण्डितः ।
कारयामास हि स्पष्टं संध्यावन्दनपद्धतिम् ॥ १ ॥

## इति श्रीमद्राघवदैवज्ञवंश्यश्रीकृष्णपण्डितविरचिते तैत्तिरीयसंध्याभाष्ये चतुर्थो गुच्छः ॥ ४ ॥

इति श्रीमद्राघवदैवज्ञवंश्यश्रीकृष्णपण्डितविरचितं तैत्तिरीयसंध्याभाष्यम् ।



# परिशिष्टम् ।

कृष्णपण्डितविरचितसंध्याभाष्यस्य मुद्रणानन्तरं मिलि-
तात्पुस्तकाल्लब्धस्य विशेषस्यात्र पृष्ठपङ्क्ति-
निर्देशपुरःसरं संग्रहः ।

५ पृष्ठे ११ पङ्क्तौ—यद्यपीत्यादि न काऽपि क्षतिरित्यन्तस्थाने—"यद्यपि विवरणकारमतेऽध्ययनविधेरक्षरावाप्तिरेव फलं न तु फलवदर्थावबोधः, तथाऽपि सकलतान्त्रिकसंमतेरनपेक्षितत्वात्(?)। वस्तुतस्तु तत्रापि विधेरर्थावबोधपर्यन्तव्यापाराभावेऽप्यक्षरावाप्तिद्वारा(?) पर्यवसानाङ्गीकारान्न काऽपि क्षतिः" इति विशेषः।

६ पृष्ठे १६ पङ्क्तौ—न तत्कृतमित्यस्यानन्तरमधिको ग्रन्थः स यथा—"तस्माद्यज्ञोपवीतिना कर्तव्यमिति सिद्धम्। अथ संध्यावन्दनस्य फलविचारः क्रियते । नन्वहरहः संध्यामुपासीतेति संध्यायाः कर्तव्यताबोधकं मूलवाक्यमुपन्यस्तम्, तदनुपपन्नं तद्विधीयमानस्यैव दुर्ज्ञेयत्वात् । तथा हि न तावन्नित्यत्वम्, कामनाप्रवणानां नराणां निष्फले नित्यकर्मणि बह्वायाससाध्ये प्रवृत्त्यनापत्तेः। नापि नैमित्तिकत्वम्, गृहरथाधारे भग्न इन्द्रबाहुर्बद्धव्यः, पायसं ब्राह्मणो भोजयितव्य इव निमित्ताश्रवणात्। न चाहरहरिति कालस्यैव निमित्तत्वमाग्रयणस्य शरत्कालवदिति वाच्यम्। तथा सति वसन्ते ज्योतिषा यजेतेत्यत्रापि वसन्तस्यापि निमित्तत्वे ज्योतिष्टोमस्यापि नैमित्तिकत्वं स्यात्। नापि प्रायश्चित्तरूपम्, "गुरुतल्पगामिनः सवृषणं शिश्नं परिवास्याञ्जलावादाय दक्षिणां दिशमनावृत्ति व्रजेत्" इत्यादौ पापसंयोगे तत्प्रायश्चित्तविधानात् । नापि काम्यम्, विध्युद्देशे फलसंबन्धाश्रवणात्, न तथाऽश्रुतफले संध्यावन्दने स्वर्ग एव फलतया कल्पनार्हः, यथा विश्वजिता यजेतेत्यतो विश्वजिद्यागस्याधिकारे(?) कल्प्ये स स्वर्गः स्यात्सर्वावशिष्टत्वादिति सर्वकामनाविषयतया स्वतः सुन्दरः स्वर्गः फलतया कल्प्यते । तर्हि फलकामनायां सत्यामेव तदनुष्ठानं तदभावे तु तदनुष्ठानं न स्यात्, पशुकामनातदभावप्रयुक्तचित्रानुष्ठानाननुष्ठानवत् ।

न च तथा दृश्यते । परं तु कृताभिषेकाः सर्वजनपदेषु एकान्तसमाहिता-स्तथाविधफलानपेक्षिणो दम्भलोभशून्या महाजना निरन्तरं यथाकालं तदनुष्ठानमाचरन्ति । तस्मात्तस्य काम्यत्वमङ्गीकृत्य कादाचित्कानुष्ठानमङ्गीकर्तुमनुचितमिति । न च प्रकृते स्वर्गः फलत्वेन कल्पनीयः । तस्मात्किमनेन विधीयत इति चेदत्र ब्रूमः । संध्यावन्दने नित्यं न तु चित्रादिवत्काम्यमिति प्रभाकरेण संध्यावन्दनस्य तेन विधिवाक्येन नित्यत्वविधानात् । अन्यथा पूर्वोक्तानामकरणे प्रत्यवायप्रदर्शकानां बहूनामाप्तवचनानां पीडा स्यात् । न च नित्यं निष्फलमिति न्यायेन संध्यावन्दनस्य नित्यत्वे निष्फलत्वं वाच्यम् । तथा च फलशून्ये तस्मिन्न कस्यापि प्रवृत्तिरिति प्रागेवोद्घोषितमिति शङ्कनीयम् । प्रभाकरैस्तथाऽभ्युपगमेऽप्यस्माभिर्नित्यकर्मणि प्रत्यवायनिवृत्तिफलस्य स्वीकारात् । न चात्र मानाभावः "धर्मेण पापमपनुदति" इति श्रुतेः । "योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये" इति स्मृतेश्च । सङ्गं फलाभिसंधिमित्यर्थः । आत्मशुद्धये मलापकर्षणेन चित्तशुद्धय इत्यर्थः । "नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्" इति । "संध्यामुपासते ये तु सततं संशितव्रताः । विधूतपापाः" इति च स्मृत्यन्तरे स्पष्टमेव प्रत्यवायनिवृत्तिफलश्रवणाच्च । तस्मात्प्रत्यवायनिवृत्तिलक्षणं फलं सम्यगस्तीति न किंचिदनुपपन्नम् । नन्वेवं चेन्नित्यकाम्ययोर्विवेको न स्यात्, उभयत्रापि फलवत्त्वाङ्गीकारात् । उच्यते—फलाभिसंधिपूर्वकानुष्ठानविषयत्वाविषयत्वाभ्यामुभयोर्भेदसंभवात् । तथा हि—स्वर्गकामादिवाक्यसामर्थ्यात्स्वर्गादिकामनया यागाद्यनुष्ठानप्रवृत्तौ यागादेः काम्यत्वं, प्रकृते तु तथाकामनयाऽनुष्ठानानिर्णयाद्विध्युद्देशे फलसंकीर्तनस्याभावाच्च संध्यावन्दनादि नित्यमिति रमणीयम् । ममोपात्तदुरितक्षयार्थं श्रीपरमेश्वरप्रीत्यर्थं संध्यामुपासिष्य इत्यनुष्ठानप्रारम्भकाले फलसंकीर्तनपुरःसरं संकल्पोऽस्ति तथाऽपि न तावन्मात्रेण संध्यावन्दनस्य काम्यत्वसिद्धिः, तद्वाक्यस्य संध्यावन्दनादौ परमेश्वरार्पणलाभाय महाजनैः परिगृहीतत्वात् । यागादिकाम्यकर्मफलस्वर्गादिविलक्षणतया दुरितनिराकरणलक्षणनित्यकर्मफलस्वरूपप्रदर्शनपरत्वाच्च । वयं त्वत्र ब्रूमः—यत्कर्मकलापानुष्ठानाकरणे यत्र प्रत्यवायः श्रूयते तत्कर्म नित्यं यदकरणे प्रत्यवायो न दृश्यते न तन्नित्यम् , तदाहुष्टीकाकाराः पञ्चपादीयकाचार्या अध्ययनविधिनिरूपणप्रसङ्ग उपनयनाख्यसंस्कारो नित्यः, अकरणे प्रत्यवायश्रवणादिति । एवं चाकरणे प्रत्यवायश्रवणाश्रवणाभ्यां नित्यकाम्यविवेकः सुलभः । नन्विदं विरुद्धं प्रायश्चित्तस्याप्यकरणे प्रत्यवायश्रवणात् । तथा हि—" अतीते चिरकाले तु द्विगुणं व्रतमर्हति " इति वचनेन तद्विधानात्कथं तेन नित्यत्वविवेकः स्यादिति चेन्न । प्रायश्चित्ताकरणे

दोषनिरसनाय न हि द्विगुणं व्रतं विधीयते परं तु प्रायश्चित्तैर्निराकरणीयस्य प्रागुक्तदुरितस्यैव चिरकाले त्वतीते द्विगुणव्रतापेक्षयैव निरास उच्यते, अन्यथा प्रायश्चित्तानवस्थाप्रसङ्गात् । अत्रायमभिसंधिः—विहितकर्माननुष्ठानं न प्रत्यवायजनकम् । अभावस्याकारणत्वात् । परं तु तद्विरुद्धकर्मकरणमेव तथा । तत्तु कुत्रचित्कायिकं कुत्रचिद्वाचिकं कुत्रचिन्मानसिकमिति विवेकः । तदुक्तं भट्टपादैः—"स्वकाले यदकुर्वंस्तु करोत्यन्यदचेतनः । प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते" इति । अचेतनो मूढधीरित्यर्थः । अस्य कर्तुरित्यर्थः । स प्रत्यवायः । स्वकाले विहितकर्मानुष्ठानकाले । यद्विहितमकुर्वन्नन्यदविहितं विरुद्धाचरणं करोति अस्य प्रत्यवायस्तेन जन्यते नाभावेनेति कारिकार्थः । ननु काम्यकर्मणां कालेऽप्यकरणे प्रत्यवायः श्रूयते । यथा सिद्धान्ते काम्यत्वेनाभिमते श्रवणे(?) अरुन्मुखान्यतीन्शालावृकेभ्यः(?) प्रायश्चित्ताकरणे प्रत्यवायः श्रूयते(?) तदा नोभयोर्भेद इति चेत्(?)। तद्वाच्यम्(?) आरम्भादूर्ध्वमेव नित्यतासंपादकत्वम्, न तु संध्या(?) । तद्यथाकालमनुष्ठाने दोषसंकीर्तनपरत्वं(?) तत्रेति रहस्यम् । नन्वेवं चेन्नित्यनैमित्तिकयोर्भेदो न स्यात्तत्रापि प्रत्यवायश्रवणादिति चेन्न । निमित्तसंयोगासंयोगाभ्यां भेदसंभवात् । तस्मादहरहः संध्यामुपासीतेति मूलवाक्यं संध्यानित्यताबोधकम् । तत्र प्रत्यवायनिवृत्तिलक्षणं फलमप्यस्तीति सर्वं सुन्दरम् । अथ विधिविचारः, ननु कोऽयं विधिः । उच्यते—मानान्तरानवधारितार्थे संध्यावन्दनरूपे प्रवृत्तत्वादपूर्वविधिरेव यजनविधिवत् । तदुक्तं भट्टपादैः—विधिरत्यन्तमप्राप्त इति । ननु संध्यात्रयमध्ये कस्य प्राथम्यम्, उच्यते— " इति ।

९ पृ० २२ प०—त्रिष्टुभं राजन्यो जगतीं वैश्य इत्यस्य स्थाने—"त्रिष्टुभं चैव राजन्यो जगतीं वैश्य एव चेति " इति ।

१२ पृ० १९ प०—लोकावभिजयतीतीत्यस्यानन्तरमधिको ग्रन्थः स यथा—" ननु तर्हि कः पक्षः समाश्रयणीयः । उच्यते—सायंकाले हि संध्यावन्दनं विहितम् । तथाच स्वकाले बलवत्यपीति न्यायेन तदेवातिपन्नानुष्ठानात्पूर्वं कर्तुमुचितम् । तदनन्तरमतिपन्नानुष्ठानम् । यदा पुनः सायंसंध्याकालोऽप्यतिक्रान्तस्तदानीं यथाक्रममनुष्ठानं भवति । अतिक्रान्ताविशेषत्वात् । स्वकालस्यातिपन्नत्वेन वर्णितन्यायप्रसरणाच्च । तस्मादतिपन्नानुष्ठानात्पूर्वं स्वकाले सायंसंध्यावन्दनं कार्यम् । अत एव भट्टाचार्यैरपि स्वकाले कर्मानुष्ठानं गरीयः, तद्विहाय तत्काले तद्भिन्नं किंचित्कृतं चेन्महाप्रत्यवायो भवतीति(?) । "स्वकाले यदकुर्वंस्तु करोत्यन्यदचेतनः । प्रत्यवायस्तु तेनैव " इति(?) । किंच—स्वकाले

सायंसंध्यावन्दनं कर्तव्यमिति स्मृत्यन्तरे कीर्तितम् । " मध्याह्ने समतिक्रान्ते सायंकालो भवेद्यदि । सायंसंध्यामुपास्याऽऽदौ संध्यां माध्याह्निकीं चरेत्" इति । न चैवं क्रमानुष्ठानसंपादकवचनानां का गतिरिति वाच्यम् । सायंसंध्यावन्दनस्यापि कालातिपत्तिवेलायां संध्यात्रयसमवाये कस्य प्रथममनुष्ठानमिति जिज्ञासायां यथाक्रममेवानुष्ठानं न तु व्युत्क्रमेणेतिज्ञानार्थं तथाविधवचनप्रवृत्तेः । अत्र स्मृतिवचनम्—"सायंकालो व्यतीतश्चेदस्तं याते दिवाकरे । कुर्यादावर्तनीं संध्यां समारभ्य यथाक्रमम् " आवर्तनं नाम मध्याह्नः । तथा च माध्याह्निकीं संध्यामिति फलितार्थः । प्रसङ्गात्किंचिदुच्यते—"कुर्वीताऽऽवर्तनीं संध्यां रात्रावपि न दुष्यति । दद्यादर्घ्यं तु गायत्र्या सौरसूक्तं विवर्जयेत् । मध्याह्नसंध्या रात्रौ चेत्प्रमादात्क्रियते यदि । सौरस्थाने जपेत्सूक्तं सौरं वैश्वानरीयकम् " इति । परमप्रकृतं तु सायंसंध्यावन्दनं स्वकालेऽतिक्रान्तानुष्ठानात्पूर्वं कर्तव्यम् । ततोऽतिक्रान्तानुष्ठानमिति सिद्धम् ।

१२ पृ० २९ प०—" यदौपा " इत्यस्य स्थाने " यथौपा " इति ।

१४ पृ० २२प०—बाहुमूलमुपेत्यस्य स्थाने " बाहुमूले उप " इति ।

१५ पृ० १० प०—पादावित्यस्य स्थाने " हस्तौ " इति ।

१५ पृ० ३० प०—मनमूलिकेत्यस्य स्थाने " मनविधायिका " इति ।

१७ पृ० १० प०—संहताङ्गुष्ठेत्यस्य स्थाने " संहताङ्गुलि " इति ।

१७ पृ० १३ प०—आचामेदित्यस्य स्थाने " आचामयेत् " इति ।

१७ पृ० १४ प०—आचमयतीत्यस्य स्थाने " आचामयेत् " इति ।

१७ पृ० २५ प०—चेदित्यस्य स्थाने " चेन्न " इति ।

१८पृ० ५प०—प्रथमपानेनेत्यस्यानन्तरमधिको ग्रन्थः स यथा—"ऋग्वेदं प्रीणाति द्वितीयपानेन यजुर्वेदं प्रीणाति तृतीयपानेन सामवेदं प्रीणात्यथ सव्यकरेण जलमुत्सृजेत्तेन पितॄन्प्रीणात्यथ हस्तावभ्युक्ष्य तेनेतिहासपुराणादीनि प्रीणाति मुखं द्विजः परिमृजेत्प्रथममार्जनेनाथर्वणवेदं प्रीणाति द्वितीयमार्जनेनाङ्गानि प्रीणात्यथ पादावभ्युक्ष्य तेन विष्णुमग्निं प्रीणात्यथ चतसृभिरङ्गुलिभिरोष्ठौ संस्पृशेत्तेन सरस्वतीं प्रीणात्यथाङ्गुष्ठतर्जनीभ्यां नासाद्वारे संस्पृशेत्तेन वायुं प्रीणात्यथाङ्गुष्ठमध्यमाभ्यां चक्षुषी संस्पृशेत्तेन चन्द्रादित्यौ प्रीणात्यथाङ्गुष्ठानामिकाभ्यां श्रोत्रे संस्पृशेत्तेनाऽऽकाशं प्रीणात्यथाङ्गुष्ठकनिष्ठिकाभ्यां नाभिं संस्पृशेत्तेन प्रीणात्यथ हस्ततलेन हृदयं संस्पृशेत्तेन च पञ्च प्राणान्प्रीणाति सर्वाभिरङ्गुलिभिः शिरो बाहू च संस्पृशेत्तेनाश्विनौ देवते प्रीणाति तेन परब्रह्मस्थानं परब्रह्म प्रीणाति " इति ।

१८ पृ० ८ प०—तत्रेत्यादि तत्रासामर्थ्यादित्यन्तस्थाने "ते तावत्प्रष्टव्याः। तत्कल्पनायां बौधायनसूत्रं प्रमाणमाहोस्विद्वचनान्तरम् । न द्वितीयः । तथाविधवचनान्तराश्रवणात् । नाऽऽद्यः । बौधायनवचनस्य तथात्वेतिकर्तव्यताप्रतिपादकत्वेन तत्र सामर्थ्याभावात् " इति ।

१८ पृ० १३ प०—इत्यादिवचनाद्ब्रह्मणे नम इत्याद्याचारापत्तेरित्यस्य स्थाने—"गङ्गा च यमुना चैव प्रीयते हस्तमार्जनात् । पादाभ्यां प्रीयते विष्णुर्ब्रह्मा शिरसि कीर्तितः । नासत्यावत्र प्रीयेते स्पृष्टे नासापुटे उभे । स्पृष्टे लोचनयोस्त्वेतौ प्रीयेतेत्यनलानिता (?) । स्कन्धयोः स्पर्शनादेव प्रीयन्ते सर्वदेवताः । नाभिसंस्पर्शनान्नागाः प्रीयन्ते चास्य नित्यशः । संस्पृष्टे हृदये चास्य प्रीयते चन्द्रदेवता । मूर्धसंस्पर्शनादस्य प्रीतस्तु पुरुषो भवेत्" इत्यत्रापि ब्रह्मणे नम इति प्रथमपानं स्याद्विष्णवे नम इति द्वितीयपानं स्याद्रुद्राय नम इति तृतीयपानं स्यादेवं सर्वं योज्यम् । न चेष्टापत्तिः । असंप्रतिपत्तेः । न हि कुत्रापि देशे शिष्टा एवमाचरन्ति । न च तद्वचनस्य प्रीणने तात्पर्यान्न तत्र सामर्थ्यमिति वाच्यम् । तथा प्रकृतेऽपि शीतला दृष्टिर्दीयताम् । अविशेषात् " इति ।

१८ पृ० १८ प०—विवेक इत्यस्यानन्तरमधिको ग्रन्थः स यथा—"इति संप्रदायः—आश्वलायनगृह्यपरिशिष्टकारेण प्रकारान्तरेण निर्णीतम् । तथा हि—उदकं दक्षिणेन पाणिनाऽऽदाय कनिष्ठाङ्गुष्ठौ विश्लिष्टौ वितत्य तिस्रोऽन्तराङ्गुलीः संहतोर्ध्वाः कृत्वा ब्राह्मेण तीर्थेन हृदयप्रापि त्रिः पीत्वा पाणिं प्रक्षाल्य स्पृष्टाम्भसाऽङ्गुष्ठमूलेनाऽऽकुञ्चितोष्ठमास्यं द्विः प्रमृज्य सकृच्च संहतमध्यमाङ्गुलीभिः पाणिं प्रक्षाल्य सव्यं पाणिं पादौ शिरश्चाभ्युक्ष्य स्पृष्टाम्भसा संहतमध्यमाङ्गुलित्रयाग्रेणाऽऽस्यमुपस्पृश्य साङ्गुष्ठया प्रदेशिन्या घ्राणबिलद्वयमनामिकया चक्षुःश्रोत्रे कनिष्ठिकया नाभिं च तलेन हृदयं सर्वाभिरङ्गुलीभिः शिरस्तदग्रैरंसौ चोपस्पृशेदित्येतदाचमनमेवं द्विराचम्येति । तत्र कल्पद्वयेऽविगीतशिष्टाचारादाचारो वेदितव्यः ।

२० पृ० १५ प०—प्राणायाम इत्यस्य स्थाने प्राणायाममिति ज्ञेयम् ।

२० पृ० २८ प०—निगर्वस्तु इत्यस्य स्थाने निगमस्तु इति ।

२१ पृ० १६ प०—इति श्रुतेरित्यस्यानन्तरमधिको ग्रन्थः स यथा—"अत्रायं भावः । ब्राह्मणमात्रस्य फलवदर्थावबोधपर्यवसायि सकलवेदाध्ययनं विहितम् । स्वकर्म ब्राह्मणस्याध्ययनमिति धर्मशास्त्रात् । तत्र दैवान्मानुषात्पुरु-

षायुषोऽल्पकालत्वाच्च न तत्र तद्भाग्यं संभवतीत्यतः सर्वसाधारण्येन सकलवेदाध्ययनफलसिद्ध्यर्थं सकलवेदसारभूतः प्रणवः प्रथमतः पठितः । युक्तं चैतत् " इति ।

२१ पृ० १७ प०—इति वचनादित्यस्यानन्तरमधिको ग्रन्थः स यथा—"अस्य वेदसारत्वं बह्वृचब्राह्मणे—प्रजापतिरकामयतेत्यस्मिन्खण्डे प्रतिपादितम् " इति ।

२१ पृ० १८ प०—ओमिति वै दैवं सर्वमितीत्यस्य स्थाने "ओमितीदं सर्वमिति " इति ।

२१ पृ० १९ प०—व्यपदेश इत्यादि स्थानत्वादित्यन्तस्थाने " उपदेशः, ननु तस्य वर्णात्मकत्वेन कथं सर्वमयत्वमिति चेदुच्यते--तस्य सर्वमयत्वं सर्वात्मकब्रह्माभिव्यक्तियोग्यस्थानकत्वात् " इति ।

२१ पृ० २२ प०—इत्यर्थ इत्यस्यानन्तरमधिको ग्रन्थः स यथा—"अन्तिकबाढयोर्नेदसाधाविति पाणिनिस्मरणात् " इति ।

२१ पृ० २ प०—तस्येत्यादितदभिव्यक्तियोग्यत्वमित्यन्तस्थाने—" तस्य ब्रह्मत्वमेवोक्तम् । तदभिव्यक्तियोग्यस्याखण्डानन्दचिदेकरसस्य निष्कलङ्कस्य परमेश्वरस्य स्वरूपपरीक्षकं निबिडतरं पर्यालोचयद्भिरपि योगिभिः स्पष्टतरं ग्रहीतुमशक्यत्वात्तस्मिन्नेवाक्षरे ब्रह्मत्वव्यपदेशः । स्थूलारुन्धतीन्यायेन तस्य ब्रह्मत्वव्यपदेश इति श्रुतेस्तात्पर्यं वर्णनीयम् " इति ।

२१ पृ० २९ प०—ब्रह्मत्वादित्यस्यानन्तरमधिको ग्रन्थः स यथा—" तस्मादुक्त एव पन्थाः स्वीकर्तव्यः " इति ।

२२ पृ० ११ प०—योगलक्षणेत्यादि दर्शनादित्यन्तस्थाने—"योगलक्षणमुक्तम् । यद्वा सकलकर्मकलापे चित्तैकाग्र्यमावश्यकमिति संध्याकर्मकाले तत्सिद्ध्यर्थमुक्तरीत्या तत्संपादकः प्रणवः कर्तव्य इति प्रथमस्तन्निर्देश इति गायत्रीहृदयदर्शनात् " इति ।

२२ पृ० १३ प०—इत्यर्थ इत्यस्यानन्तरमधिको ग्रन्थः स यथा—"अथ शब्दयोः सामानाधिकरण्यमेकार्थकत्वमिति वाच्यम् । तथा च ब्रह्मैव भूलोकादीनामित्यर्थः पर्यवसन्नः " इति ।

२२ पृ० १४ प०—भाव इत्यस्यानन्तरमधिको ग्रन्थः स यथा—" ननु ब्रह्मणः सर्वात्मकत्वे किं मानमिति चेन्न । अथ भूमा स एवाधस्तात्स उपरिष्टात्स पश्चात्स दक्षिणतः स उत्तरतः स एवेदं सर्वम् , सर्वं खल्विदं ब्रह्म

नेह नानाऽस्ति किंचन, इत्यादिश्रुतिभ्यो ब्रह्मणः सर्वात्मकत्वश्रवणात् । ननु स एवाधस्तादित्यत्र सप्तम्यर्थेऽधस्तादिति प्रत्ययविधानात्सर्वगत्वमेव प्रतीयते न सर्वात्मकत्वमिति चेदुच्यते—[ ब्रह्मणोऽक्रियत्वश्रवणात् । तथा च ] ब्रह्मणः सर्वात्मकत्वं प्रामाणिकमिति भावः " इति ।

२३ पृ० ९ प०—इति । मार्जयेदितीत्यस्य स्थाने—"स्पृष्ट्वा चाभिष्ठुतं तोयं मूर्ध्ना ब्रह्ममुखेन(ण) च । आपो हि ष्ठादिभिर्मन्त्रैर्दर्भैः शिरसि मार्जयेत्" इति । मूर्ध्ना गायत्रीशिरसा, ओमाप इत्यादिनेत्यर्थः " इति ।

२३ पृ० ११ प०—वचनादित्यस्यानन्तरमधिकं यथा—" अभिष्ठुतमभिमन्त्रितमित्यर्थः " इति ।

२४ पृ० २८ प०—मानाभावादित्यस्य स्थाने—"न मानमस्ति" इति ।

२४ पृ० २९ प०—अन्नसाधनत्वादित्यस्य स्थाने—"तथात्वात्" इति ।

२५ पृ० ५ प०—पाणिनिस्मरणादित्यस्यानन्तरमधिकं यथा-" अत्र कश्चिज्जल्पति, ऊर्क्शब्दस्य नान्नवाचित्वं किं तु प्राणबलयोर्वर्धकः कश्चिद्रसविशेषस्तस्यार्थः । अन्यथा, इषे त्वोर्जे त्वेत्यत्र पौनरुक्त्यं स्यात् । तत्रेडन्नमूर्ग्रस इति भाष्यकारैर्वर्णितत्वात् । किमितिन्यायमत्यन्तशिक्षितः (?) । तथा सति यो वः शिवतमो रसस्तस्य भाजयतेत्यग्रेतनवाक्यार्थेऽविशेषः स्यात् । इषे त्वेत्यत्र तु इट्शब्दोर्क्शब्दयोरोदनार्थकल्पनेन पौनरुक्त्यं स्यादिति भीत्योर्क्शब्दस्यान्नपरत्वं संयुज्यते । वाक्यान्तरेऽविशेषप्रसङ्गात् । न चायं रसः कश्चिदग्रेतनवाक्यप्रतिपाद्यो रसोऽपि कश्चिदित्युभयोर्भेदस्वीकारान्न मन्त्रेषु जामिताऽस्तीतिभाष्यकारवचनाद्वा न पौनरुक्त्यमिति वाच्यम् । तत्कल्पनायामुपपत्त्यभावात् । ऊर्जेऽन्नायेतिनिरुक्तिवचनव्याकोपाच्च । न चैवमिषे त्वेत्यत्रापि वचनविरोधं पश्यन्तस्तथा कथं व्याचक्षुस्तद्व्याख्यातार इति शङ्कनीयम् । प्रकरणपर्यालोचनया तस्य निरुक्तवचनस्याऽऽपो हि ष्ठेतिमन्त्रमनुद्दिश्य प्रवृत्तत्वात् । तत्रोर्क्शब्दस्य रसार्थकत्वेऽपि न काचिद्धानिः । प्रकृते तु तथात्वकल्पने निरुक्तस्य निरवकाशतया सर्वथा बाध एव भवता संपादितः स्यादिति न तस्य रसार्थकत्वं, परं त्वस्मदुक्त एव पन्थाः सुगमनीयः " इति ।

२५ पृ० १९ प०—इन्द्रियमोक्ष इत्यस्य स्थाने " इन्द्रियक्षोभे " इति ।

२५ पृ० २२ प०—रसमेवेत्यस्य स्थाने " सरसमेव " इति ।

२६ पृ० २२ प०—अक्षमित्यस्य स्थाने " अन्नम् " इति ।

२८ पृ० ५ प०—इच्छन्तीतीत्यस्य स्थाने " इच्छन्ति " इति।

२९ पृ० ७ प०—स्वाहेत्यनन्तरमधिको ग्रन्थः स यथा—" सूर्ये सूर्यात्मके ज्योतिषि जुहोमि स्वाहा " इति।

मुद्रणानन्तरमुपलब्धं पुस्तकं सूर्यश्चेतिमन्त्रव्याख्यानपर्यन्तमेवास्ति न ततोऽग्रे।



ॐ तत्सद्ब्रह्मणे नमः ।

भट्टोजीदीक्षितविरचितं

# तैत्तिरीयसंध्याभाष्यम् ।

आचम्य प्राणानायम्य प्रातःसंध्यामुपासिष्य इति संकल्प्य, आपो हीति तिसृभिर्मार्जनं कुर्यात् । तासामयमर्थः—[ आपो हि ष्ठेति । ( तै० आ० प्र० १० अ० १ ) ] हे 'आपः' उदकाधिष्ठात्र्यो देवताः, 'अभिमानिव्यपदेशस्तु' इत्युत्तरमीमांसान्यायात् । 'हि' यस्मात्कारणाद्यूयं 'मयोभुवः' मयः सुखं भवन्ति भावयन्ति ताः । मयःशब्दो वैदिकनिघण्टे सुखनामसु पठितः । तस्मिन्नुप-पदेऽन्तर्भावितण्यर्थाद्भवतेः कर्तरि क्विप् । 'स्थ' तिष्ठथ । स्थेत्यस्यान्येषा-मपीति संहितायां दीर्घः । पूर्वपदादिति सूत्रेण सस्य षत्वम् । अतो हेतोः 'ताः' प्रसिद्धा यूयं 'नः' अस्मान् 'ऊर्जे' अन्नाय । उपलक्षणमिदम् । सकलवैषयिकभोगेभ्यो 'दधातन' धत्त तदुपहितान्कुरुतेत्यर्थः । किंच 'महे' महते 'रणाय' शब्दाय कीर्तये धत्त । अपि च 'चक्षसे' दर्शनाय, तत्त्वसा-क्षात्कारायेति यावत् । धत्त तत्त्वसाक्षात्कारशालिनः कुरुतेत्यर्थः । दधाते-र्लोटि मध्यमपुरुषबहुवचनस्य 'तप्तनप्तनथनाश्च' इति तनबादेशः ।

यो व इति । ( तै० आ० प्र० १० अ० १ ) हे, आपो 'नः' युष्माकं 'शिवतमः' सुखतमो 'यो रसः' अस्ति 'तस्य' तं रसम् । कर्मणः शेषत्व-विवक्षायां षष्ठी । 'इह' अस्मिँल्लोके 'नः' अस्मान् 'भाजयत' सेवयतो-पयोजयतेत्यर्थः । अत्र दृष्टान्तः—'उशतीः' उशत्यः पुत्रस्य पुष्टिं कामय-मानाः 'मातरः' स्तन्यं यथा पाययन्ति तद्वत् । वश कान्तौ । शत्रन्तान्ङीप् । जसि पूर्वसवर्णदीर्घः । 'दीर्घाज्जसि च' इति निषेधस्तु न । 'वा छन्दसि' इति वैकल्पिकत्वात् ।

तस्मा इति । ( तै० आ० प्र० १० अ० १ ) हे, आपः 'तस्मै' ज्ञानरूपाय प्रयोजनाय 'अरम्' अलमत्यर्थम् । वालमूलेत्यादिवार्तिकेनालमो लस्य रः । 'वः' युष्मान् । 'गमाम' शरणं गमाम शरणं गच्छाम । 'यस्य' ज्ञानस्य 'क्षयाय' निवासाय । क्षि निवासगत्योः । 'एरच्' 'क्षयो निवासे' इत्याद्यु-

दास्तः । ‘ जिन्वथ ’ प्रीणयथास्मानविक्षिप्तचित्तान्कुरुथ किंच ‘ नः ’ अस्मान् ‘ जनयथ ’ पुत्रादिजननसमर्थान्कुरुत । संहितायां दीर्घः प्राग्वत् ।

ततः—सूर्यश्च० ( तै० आ० प्र० १० अ० ३२ ) इति मन्त्राचमनं कृत्वा द्विराचामेत् । तस्यायमर्थः—‘ सूर्यः ’ तथा ‘ मन्युः ’ क्रोधाभिमानिदेवः, तथा ‘ मन्युपतयः ’ क्रोधस्वामिनस्तन्नियामका देवाः, एते सर्वे ‘ मा ’ मां ‘ मन्युकृतेभ्यः ’ कोपवशात्कृतेभ्यः ‘ पापेभ्यो रक्षन्तां ’ पापविनाशनेन मां पालयन्त्वित्यर्थः । किंच ‘ रात्र्या ’ अतीतायां रात्रौ ‘ मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना ’ शिश्नेन च ‘ यत्पापमकार्षं तत् ’ सर्वं तदभिमानिनी देवता ‘ अवलुम्पतु ’ विनाशयतु । किंच ‘ मयि यत् ’ किंचिद्दुरितमस्ति, ‘ इदं ’ च कर्मीभूतं मां चाहंकाररूपं कर्तारम् ‘अमृतयोनौ’ मरणरहिते योनौ जगत्कारणे ‘ सूर्ये ’ जगत्प्रेरके । राजसूयसूर्येत्यादिना निपातः । ‘ज्योतिषि’ स्वयंप्रकाशे वस्तुनि ‘ अहम् ’ अहंकाराधिष्ठानचिद्रूपो ‘ जुहोमि ’ प्रक्षिपामि । होमेन तत्सर्वं भस्मी करोमीति तात्पर्यार्थः । ‘ स्वाहा ’ देवतोद्देशेनेदं त्यक्तव्यमस्त्वित्यर्थः ।

मध्याह्ने तु—आपः पुनन्तु ( तै० आ० प्र० १० अ० ३० ) इति मन्त्रः । अस्यार्थः—‘ आपः पृथिवीं पुनन्तु ’ प्रक्षालनेन शोधयन्तु । किंच ‘ पृथिवी पूता ’ शुद्धा सती ‘ माम् ’ अनुष्ठातारं शोधयतु । ‘ ब्रह्मणः ’ वेदस्य ‘ पतिः ’ पालकमाचार्यम् । सुपां सुलुगिति अमः सुः । पुनन्तु । अपि च ‘ ब्रह्म ’ वेदस्वरूपं ‘ पूता ’ पूतम् । सुपां सुलुगिति सोर्डा । ‘ मां पुनातु ’ किंच ‘ उच्छिष्टमभोज्यं यत् ’ कदाचिन्मया भुक्तमन्यत् ‘ वा यन्मम दुश्चरितं ’ तत् ‘ सर्वं ’ परिहृत्येति शेषः । ‘ आपो मां पुनन्तु ’ । तथा ‘ असतां ’ शूद्रादीनां ‘ प्रतिग्रहं च ’ मया कृतं पुनन्तु । ‘ स्वाहा ’ इति प्राग्वत् ।

सायंकाले तु—अग्निश्च ( तै० आ० प्र० १० अ० ३० ) इति मन्त्रः । स सूर्यश्चेत्यनेनैव व्याख्यातः । ‘ सत्ये ’ कालत्रयाबाध्ये ‘ ज्योतिषि ’ इति विशेषः ।

ततो दधिक्राव्ण इत्यादिभिर्मार्जयेत् । दधिक्राव्ण इति । ( तै सं० का० १ प्र० ५ अ० ११ ) धत्ते धारयतीति दधिर्धारकः सन्क्रामति सर्वमाक्रामति वशी करोतीति दधिक्रावा देवताविशेषः, तस्य ‘अकारिषम्’ अकार्षम् । स्तुतिमिति शेषः । आदृगमेति सूत्रेण दधातेः किः । ततो दधिशब्दोपपदात्क्रमेर्वनिप् । विड्वनोरित्यात्वम् । कथंभूतस्य ‘ जिष्णोः ’ जयशीलस्य, ‘ अश्वस्य ’ व्यापकस्य । अशू व्याप्तौ । वन् । ‘वाजिनः ’ वेगवतः । वज गतौ । घञन्ता-

न्मत्वर्थ इनिः । 'नः' अस्माकं 'मुखा' मुख्यानि कर्माणि 'सुराभि' सुरभीणि प्रसिद्धानि 'करत्' करोतु। कृञो लेट्।'लेटोऽडाटौ' इत्यट्। किंच 'नः' अस्मभ्यम् 'आयूंषि प्रतारिषत्' वर्धयतु । प्रपूर्वस्तॄधातुर्वर्धनार्थः । 'सिब्बहुलं लेटि' इति सिप्। 'सिब्बहुलं णिद्वक्तव्यः' इति णित्वाद्वृद्धिः ।

पुनरापो हि ष्ठेति तिस्रः प्राग्वत् ।

हिरण्येत्यादि । (तै० सं० का० ५ प्र० ६ अ० १) 'हिरण्यवर्णाः' स्वच्छाः 'शुचयः' पूताः 'पावकाः' शोधयित्र्यः 'स्योनाः' विस्तीर्णाः 'ता आपो नः' अस्मभ्यं 'शं' सुखप्रदा 'भवन्तु' स्योनाशब्दो विस्तीर्णार्थतया स्योना पृथिवीति मन्त्रे वेदभाष्ये व्याख्यातः । उपष्टम्भकतया च वाजसनेयिनां ब्राह्मणमुपन्यस्तम् 'इन्द्रस्योरुमाविश स्योनः स्योनमिति विस्तीर्णो विस्तीर्णमित्येव तदाह' इति। 'ताः' काः, 'यासु' स्नात्वा 'कश्यपो जात इन्द्रः' जातः। उपलक्षणं चैतत् । स्नानजन्यसुकृतमहिम्ना महर्षयो देवताश्च स्वं स्वं पदं प्राप्ताः। किंच 'विरूपाः' विविधरूपवत्यः 'या आपोऽग्निम्' अग्निन्धनं गर्भमिव 'गर्भं' दधिरे धृतवत्यः ॥

यासामिति। (तै० सं० का० ५ प्र० ६ अ० १) 'वरुणो राजा यासाम्' अपां 'मध्ये जनानां' प्रजानां 'सत्यमनृतं चावपश्यन्' जानन्सन् 'याति' गच्छति। किंच 'या मधुश्चुतः' अमृतं क्षरन्त्यः। शेषं प्राग्वत् ॥

यासामिति। (तै० सं० का० ५ प्र० ६ अ० १) 'देवाः' इन्द्रादयः 'दिवि' स्वर्गे 'यासाम्' अपां 'भक्षं' भक्षणं कुर्वन्ति। 'याः' च 'अन्तरिक्षे' वृष्ट्यादिरूपेण 'बहुधा भवन्ति'। 'याः' च 'पृथिवीं पयसा' स्वांशभूतेन 'उन्दन्ति' क्लेदयन्ति। उन्दी क्लेदने। 'शुक्राः' शुद्धाः। शेषं प्राग्वत् ॥

शिवेनेति । (तै० सं० का० ५ प्र० ६ अ० १) हे 'आपो मा' मां 'शिवेन' सुखकरेण 'चक्षुषा पश्यत'। किंच 'शिवया तनुवा' भवदीयया 'मे त्वचमुपस्पृशत'। अपि च–अप्सु सीदन्तीति 'अप्सुषदः'। तत्पुरुषे कृतीत्यलुक्। सुषामादित्वात्षत्वम् । तथाभूतान् 'वः' युष्मान् 'सर्वानग्नीन्हुवे' आह्वयामीत्यर्थः। सर्वानग्नीनित्युभयत्रापि 'दीर्घादटि समानपादे' इति नस्य रुत्वम् । पूर्वस्यानुनासिकः। आद्यस्य 'भोः भगोः' इति यत्वे कृते 'लोपः शाकल्यस्य' इति लोपः। 'वर्चः' ब्रह्मवर्चसं, 'बलं' शारीरम्, 'ओजः' पराक्रमं च 'मयि निधत्त' स्थापयत।

ततो द्रुपदागायत्र्याऽघमर्षणम्। द्रुपदादिति। ( तै० ब्रा० का० २ प्र० ६ अ० ६ ) 'आपः' देव्यः 'मा' इति माम् 'एनसः' पापात् 'शुन्धन्तु' शोधयन्तु मोचयन्त्वित्यर्थः। द्रुर्वृक्षस्तस्मिन्पदं यत्तद्द्रुपदं छिद्रकाष्ठरूपं निगडं तस्मात् 'मुमुचानः' मुक्त इव। मुचेः कर्मणि कानच्। 'इव्' निश्चये। किंच 'स्विन्नः' स्वेदवान् 'स्नात्वी' स्नात्वा 'मलात्' यथा मुच्यते। 'स्नात्व्यादयश्च' इति क्त्वाप्रत्ययस्येकारोऽन्तादेशः। 'पवित्रेण' उत्पवनसाधनीभूतेन। 'पुवः संज्ञायाम्' इति करण इत्रप्रत्ययः। 'पूतं' शोधितम् 'आज्यं' यथा मलान्मुच्येत तद्वत्।

ततः प्रातः सायं च गायत्र्या, मध्याह्ने तु हंसः शुचिषदिति मन्त्रेणार्घ्यं दद्यात्।

तदिति। ( तै० आ० प्र० १० अ० ३५ ) षू प्रेरणे। सुवति प्रेरयतीति सविता सूर्यः, तत्संबन्धि सूर्यमण्डलावच्छिन्नमिति यावत्। दीव्यतीति देवः परमात्मा तस्य 'वरेण्यं' सर्वैर्भजनीयम्। वृञ एण्यः। अविद्याकामकर्मादिभर्जनात् 'भर्गः' स्वरूपात्मकं ज्योतिः 'धीमहि' तदेवाहमिति तद्दासोऽहमिति वा ध्यायेम। 'यः' देवः 'नः' अस्माकं 'धियः' बुद्धीः 'प्रचोदयात्' प्रेरयतीत्यर्थः। बाहुलकाल्लडर्थे लेट्। 'लेटोऽडाटौ' इत्याडागमः।

हंस इति। ( तै० आ० प्र० १० अ० ४० ) ज्ञानिनं प्रति सर्वं जगद्ब्रह्मरूपेणावभासत इत्येवंपरतयाऽयं मन्त्रो नारायणीयोपनिषद्दीपिकायां माधवाचार्यैर्व्याख्यातः। तथा हि—हन्ति सर्वदा गच्छतीत्येवं रूपः सञ्शुचौ शुद्धे ज्योतिर्मण्डले सीदतीति 'शुचिषत्' सूर्यः। तथा जगन्निवसत्यस्मिन्निति 'वसुः' वायुस्तद्रूपः सन्नन्तरिक्षे सीदतीति 'अन्तरिक्षसत्'। तथा 'होता' होमनिष्पादकः सन्वेद्यां सोमयागाद्यङ्गभूतायां सीदति आहवनीयादिरूपेण तिष्ठतीति 'वेदिषत्'। तथा 'अतिथिः' दुरोणेषु गृहेषु परकीयेषु सीदतीति 'दुरोणसत्'। किंच नृषु ऋत्विक्षु यजमानत्वेन सीदतीति 'नृषत्'। नृशब्द ऋत्विक्परतया 'इमं नरः पर्वताः' 'इन्द्रं नरो नेमधिता' इत्यादिमन्त्रेषु बहुधा दृष्टः। किंच वरे श्रेष्ठे क्षेत्रे काशीद्वारवत्यादौ पूजनीयदेवरूपेण सीदतीति 'वरसत्'। तथा—ऋते सत्ये वैदिके कर्मणि फलरूपेण सीदतीति 'ऋतसत्'। व्योम्नि आकाशे नक्षत्रादिरूपेण सीदतीति 'व्योमसत्'। अब्भ्यो जायते शङ्खमकरादिरूपेणेति 'अब्जाः'। गोभ्यः क्षीरादिरूपेण जायत इति 'गोजाः'। ऋतं सत्यं वचनं तस्माद्धर्मरूपेण जायत इति 'ऋतजाः'। अद्रिभ्यः पर्वतेभ्यो

वृक्षादिरूपेण जायत इति ' अद्रिजाः ' । इत्थं हंस इत्यारभ्याद्रिजा इत्यन्तेनोपलक्षितं यज्जगत्तत् ' ऋतं ' सत्यं ' बृहत् ' ब्रह्मैवेत्यर्थः । अब्जा इत्यादिषु ' जनसनखनक्रमगमो विट् ' इति विट्प्रत्ययः । विड्वनोरित्यात्वम् ।

असावादित्यो ब्रह्म । ( तै० आ० प्र० २ अ० २ ) इति प्रदक्षिणा । स्पष्टोऽर्थः ।

आयातु वरदा ( तै० आ० प्र १० अ० ३४ ) इत्यादिना गायत्रीमावाहयेत् । ' वरदा देवी ' गायत्र्यभिमानिनी देवता ' अक्षरं ' विनाशरहितं 'संमितं' सम्यग्वेदान्तप्रमाणनिश्चितं ' ब्रह्म ' परं तत्त्वं, बोधयितुमिति शेषः । ' आयातु ' आगच्छतु । अयमेवार्थ उत्तरार्धे स्पष्टी क्रियते । ' छन्दसां ' वेदानां मातेव ' माता गायत्री नः ' अस्मान् ' इदं ' सकलवेदान्तप्रतिपाद्यं ' ब्रह्म जुषस्व ' जोषयतूपदिशत्वित्यर्थः । अत्र पुरुषव्यत्ययः ।

ओजोऽसीति [ तै० आ० प्र० १० अ० ३५ ] हे गायत्रि त्वम् ' ओजोऽसि ' बलहेतुभूतधातुविशेषरूपाऽसि । ' सहोऽसि ' शत्रूणामभिभवनशक्तिरासि । ' बलमसि ' शरीरव्यवहारसामर्थ्यरूपाऽसि । ' भ्राजोऽसि ' दीप्तिरूपाऽसि । ' देवानाम् ' अग्नीन्द्रादीनां धाम तेजो यदस्ति तन्नामा त्वमेव ' असि ' । ' विश्वं ' सर्वजगद्रूपं त्वमेव ' असि ' । ' विश्वायुः ' संपूर्णायुःस्वरूपा ' असि ' । अस्यैव व्याख्यानं ' सर्वमसि सर्वायुः ' इति । अभिभवति तिरस्करोति सर्वं पापमिति ' अभिभूः ' ' ॐ ' प्रणवप्रतिपाद्यः परमात्मा त्वमेवासीत्यर्थः ।

ततः प्राणायामं कुर्यात् । तत्र च—

ॐ भूरित्यादिः सुवरोम् ( तै०आ०प्र०१० अ०३५ ) इत्यन्तो मन्त्रोऽङ्गम् ।

तथा चामृतनादोपनिषदि श्रूयते—

'सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते' इति ।

अत्र भूरादयः सत्यान्ता लोकप्रतिपादिकाः सप्त व्याहृतयः । तेषां च लोकानां प्रणवप्रतिपाद्यब्रह्मरूपत्वविवक्षया प्रत्येकं प्रणवोच्चारणम् । गायत्री तु व्याख्याता । आपो ज्योतिरित्यादिको गायत्र्याः शिरोमन्त्रः । तस्याऽऽद्यन्तयोः प्रणवद्वयम् । ' आपः ' समुद्रादिकाः । ' ज्योतिः ' आदित्यादि । ' रसः ' मधुरादिः । ' अमृतं ' सुधा । एतत्सर्वम् ' ॐ ' ब्रह्मैवेत्यर्थः । किंच ' भूः, भुवः, सुवः ' एते त्रयो लोका अपि ' ॐ ' ब्रह्मैवेति । प्राणायामत्रयानन्तरं गायत्रीं जपेत् ।

ततः सूर्योपस्थानम्। तत्र मन्त्राः—मित्रस्य [ तै० सं० का० ३ प्र० ४ अ० ११ ) इत्यादयः।

'चर्षणयः' मनुष्या वृष्टिप्रदानेन तेषां धारकस्य 'मित्रस्य' सूर्यस्य संबन्धि श्रूयत इति 'श्रवः' यशः 'सानसिं' संभजनीयम्। षण संभक्तौ। सानसि-वर्णसीत्यादिनाऽसिजन्तो निपातितः। किंच 'सत्यं' यथार्थम्। अपि च चित्रमाश्चर्यकरं श्रवः श्रवणं यस्य, अतिशयेन तथाभूतम्।

मित्र इति। प्रकर्षेण जानन्, तत्तज्जीवकृतधर्माधर्मजातं प्रमिमाणः, 'मित्रः' सूर्यः 'जनान्' लोकांस्तत्तदुचितकर्मसु 'यातयति' उद्योत(ज)यति जना यतन्ते तानसौ प्रेरयति 'यती प्रयत्ने' हेतुमण्ण्यन्ताल्लट्। किंच 'मित्रः' एव वृष्टिद्वाराऽन्नं तथा यागांश्च जनयन् 'पृथिवीं द्यां' च 'दाधार' धारयति' अपि च—'अनिमिषा' अनिमिषेण सानुग्रहेण चक्षुषा 'कृष्टीः' कर्मवतो मनुष्यान् 'अभिचष्टे' सर्वतः पश्यति। अतः 'सत्याय' मित्राय 'घृतवत्' उपस्तरणाभिघारणयुक्तं 'हव्यं' हवनयोग्यं पुरोडाशादिकं 'विधेम' प्रयच्छेम।

प्रेति। हे 'मित्र' आदित्य 'यो मर्तः' मनुष्यो 'व्रतेन' युक्तः सन् 'ते' तुभ्यं 'शिक्षति' हविर्ददाति। शिक्षतिर्दानधर्मेति वेदभाष्यम्। 'सः' मनुष्यः 'प्रयस्वान्' प्रीणातीति प्रयोऽन्नं तद्वान् 'प्रास्तु' प्रभवतु। 'व्यव-हिताश्च' इति सूत्रेण धातूपसर्गव्यवधानेऽपि साधुत्वम्। 'त्वोतः' त्वया रक्षितो मनुष्यः केनापि 'न हन्यते न' अपि 'जीयते'। किंच—'एनं' पुरुषम् 'अंहः' पापम् 'अन्तितः' समीपात् 'नाश्नोति' न व्याप्नोति। 'दूरात्' अपि 'न' व्याप्नोति।

नमः प्राच्यै दिशे ( तै० आ० प्र० २ अ० २० ) इत्यादि स्पष्टार्थम्।

उत्तम इति। ( तै० आ० प्र० १० अ० ३६ ) 'भूम्यां' स्थितो यः पर्वतो मेरुस्तस्य मूर्धनि उपरिभागे यदुत्तमं शिखरं तस्मिन् 'जाते' हे 'देवि ब्राह्मणेभ्यः' त्वदुपासकेभ्यो 'यथासुखं' स्वस्थानं 'गच्छ'। कीदृशी त्वम्, 'अभ्यनुज्ञाता'। अर्थाद्ब्राह्मणैरेवेति बोध्यम्।

मध्याह्ने तूर्ध्वबाहुः सन्नासत्येनेत्यादिभिः सूर्यमुपतिष्ठेत।

आ सत्यनेति ( तै० सं० का० ३ प्र० ४ अ० ११ ) 'सविता' सूर्यः 'सत्येन' व्यावहारिकेण 'रजसा' अन्तरिक्षलोकेन। लोका रजांस्युच्यन्त इत्युक्तेः। 'आवर्तमानः' पुनरागच्छन् 'अमृतं' देवं 'मर्त्यं' मनुष्यं च 'निवेशयन्' स्वस्वस्थानेऽवस्थापयन् 'पश्यन्' अवेक्षमाणो 'हिरण्ययेन'

सुवर्णनिर्मितेन ‘ आयाति ’। हिरण्ययेनेत्यत्र ‘ ऋत्व्य ’ इत्यादिना मयटो मलोपः । यस्येति लोपे प्रत्ययस्वरः ।

उद्वयमिति ( तै० सं० का० ४ प्र० १ अ० ७ )। ‘ वयम् ’ उपासकाः ‘ तमसः ’ पापात् ‘ परि ’ उपरि वर्तमानं पापरहितमित्यर्थः । ‘ उत्तरम् ’ उत्कृष्टतरं ‘ ज्योतिः ’ ज्योतीरूपं ‘ देवत्रा ’ देवेषु ‘ देवं ’ द्योतमानं ‘ सूर्यं पश्यन्तः ’ उपासनाबलात्साक्षात्कुर्वन्तः सन्तः ‘ उत्तमं ’ ज्योतिः सूर्यरूपम् ‘ अगन्म ’ प्राप्नवाम . ‘ तं यथा यथोपासते तदेव भवति ’ इति श्रुतेः । देवत्रेत्यत्र ‘ देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ’ इति सप्तम्यर्थे त्राप्रत्ययः । अगन्मेति ‘ छन्दसि लुङ्लङ्लिटः ’ इति प्रार्थनायां लङ् । ‘ बहुलं छन्दसि ’ इति शपो लुक् । ‘ म्वोश्च ’ इति धातोर्मकारस्य नकारः । पदादित्वान्निघातो न ।

उदु त्यमिति ( तै० सं० का० १ प्र० ४ अ० ४३ )। ‘ केतवः ’ अश्वाः । ‘ अश्वाः केतवः ’ इति निरुक्तात् । ‘ त्यं ’ प्रसिद्धं, जातं जगद्वेत्तीति जातवेदाः सर्वज्ञस्तं, ‘ देवं ’ द्योतमानं सूर्यम्, ‘ उत् ’ उ इति निश्चयेन ‘ वहन्ति ’ प्रापयन्ति । किमर्थं ‘ विश्वाय ’ विश्वस्मै भुवनाय ‘ दृशे ’ द्रष्टुम् । विश्वानि सूर्यदर्शनं लब्ध्वा कृतार्थतां लभन्तामित्येतदर्थमिति भावः । जातवेदा इत्यत्र ‘ गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च ’ ( उ० पा० ४ सू० २२६ ) इत्यसिः पूर्वपदप्रकृतिस्वरत्वं च । दृश इति ‘ दृशे विख्ये च ’ इति च्छन्दसि निपातितः ।

चित्रमिति ( तै० सं० का० १ प्र० ४ अ० ४३ )। ‘ देवानाम् ’ इन्द्रादीनाम् ‘ अनीकं ’ सकलदेवसमूहात्मकं ‘ चित्रम् ’ आश्चर्यकरम् । ‘ मित्रस्य ’ इत्याद्युपलक्षणम् । इन्द्रादीनां सर्वेषां जगतां चक्षुरिव ‘ चक्षुः ’ ईदृशम् ‘ उदगात् ’ उदयाचलं प्राप्तम् । ततो ‘ जगतः ’ जङ्गमस्य ‘ तस्थुषः ’ स्थावरस्याऽऽत्मा नियामकः । ‘ आऽप्रा द्यावापृथिवी अन्तरिक्षं ’ च ‘ आप्राः ’ तेजसा पर्यपूरयत् । प्रा पूरणे । लङ् पुरुषव्यत्ययः ।

तच्चक्षुरिति ( तै० आ० प्र० ४ अ० ४२ )। ‘ तत् ’ प्रसिद्धं चक्षुरिव ‘ चक्षुः ’ प्रकाशकं देवेभ्यो हितं ‘ शुक्रं ’ निर्मलं पुरस्तात्सच्छुक्रम् ‘ उच्चरत् ’ उद्गच्छत्सूर्यमण्डलं ‘ शतं शरदः पश्येम ’ इत्यादि स्पष्टमन्यत् ।

सायंकाले—इमं मे वरुण ( तै० सं० का० २ प्र० १ अ० ११ ) इत्युपस्थानम् । हे ‘वरुण मे’ मम ‘ इमं हवम् ’ इदमाह्वानं ‘श्रुधि’ शृणु । ‘अद्य’ मां ‘ मृडय ’ । ‘ त्वामवस्युः ’ आत्मनोऽवं रक्षणमिच्छतीत्यवस्युः । ईदृशोऽहं

त्वाम् 'आचके' आह्वये। कै शब्दे। 'छन्दसि लिट्' इति लडर्थे लिडात्मनेपदम् ।

तत्त्वेति (तै० सं० का० २ प्र० १ अ० ११)। 'ब्रह्मणा' वेदेन 'वन्दमानः' स्तुवन्नहमृत्विक् 'तत्' यजमानेष्टं 'त्वा' त्वां 'यामि'। किंच 'यजमानः' अपि 'हविर्भिस्तत्' एव 'आशास्ते' प्रार्थयते। हे 'वरुणाहेडमानः' अनादरमकुर्वन् 'इह' मत्कर्तृकां स्तुतिं 'बोधि' बुध्यस्व। किंच—उरुर्महाञ्शंसः स्तुतिर्यस्य, एवं हे वरुण 'न आयुर्मा प्रमोषीः' न्यूनं मा कार्षीः।

यदिति (तै० सं० का० ३ प्र० ४ अ० ११)। हे 'देव वरुण ते व्रतं' त्वदीयपरिचर्यारूपमहं दिवसे दिवसे 'मिनीमसि' प्रमीणीमः। मीञ् हिंसायां 'मीनातेर्निगमे' इति ह्रस्वः। यद्यप्येवं तथाऽपि 'विशो यथा' प्रजा इव वयं स्मः। यथा सापराधा अपि प्रजाः स्वामिनाऽनुगृह्यन्ते तथा वयमप्यनुग्राह्या इत्यर्थः।

यत्किंचेति (तै० सं० का० ३ प्र० ४ अ० ११)। हे 'वरुण दैव्ये' देवसमूहरूपे 'जने यत्किंचेदमभिद्रोहम्' अपकारजातं 'मनुष्याः' वयं 'चरामसि' चरामः। किंच—'अचित्ती यत्तव धर्मा युयोपिम' अज्ञानेन 'तव' त्वदीयं 'यद्धर्म' धारकं कर्म 'युयोपिम' वयं तिरोहितवन्तः। हे 'देव तस्मादेनसः' पातकात् 'नः' अस्मान् 'मा रीरिषः' मा हिंसीः।

कितवास इति (तै० सं० का० ३ प्र० ४ अ० ११)। किं तवास्तीत्याचक्षाणाः 'कितवासः'। किंतवेत्यनुकरणादाख्यातण्यन्तात्पचाद्यच्। पृषोदरादित्वात्किमो मलोपः। 'न दीवि' इति। देवनमिव देवनं द्यौः। तस्यां दिवि। दिवेर्डिविः। अन्येषामपीति दीर्घः। इवार्थे नशब्दः। 'घ' पापं 'रिरिपुः' लिलिपुर्द्वेषवशादस्मास्वारोपितवन्तः। 'वा' अथवा। घेति पादपूरणार्थोऽयम्। तस्य 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' इति संहितायां दीर्घः। 'यत्' पापं 'सत्यं' कृतम् 'उत यन्न विद्मः' कृतं न वेति न जानीमः 'ता' तानि 'सर्वा' सर्वाणि 'शिथिरेव' शिथिलानीव 'विष्य' विशेषेण नाशय। षोऽन्तकर्मणि। विपूर्वाल्लोटि मध्यमः। सर्वा ता शिथिरेत्यत्र 'शेश्छन्दसि बहुलम्' इति शिलोपे 'न लोपः प्रातिपदिकान्तस्य' इति नलोपः। 'अथा ते स्याम वरुण प्रियासः'। हे 'वरुणाथ' अनन्तरं 'ते' तव 'प्रियासः' प्रियाः। 'आज्जसेरसुक्' इति जसोऽसुगागमः। 'स्याम' भवेम।

इति श्रीभट्टोजीदीक्षितविरचितं तैत्तिरीयसंध्याभाष्यम्।

ॐ तत्सद्ब्रह्मणे नमः ।

# *तैत्तिरीयसंध्याभाष्यम् ।

अथ सायणाचार्यकृततैत्तिरीयसंध्यामन्त्रव्याख्या प्रारभ्यते ।

तत्राऽऽदौ भस्मलेपनमन्त्रार्थः ।

सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवे भवे नातिभवे भवस्व माम् । भवोद्भवाय नमः । ( तै० आ० प्र० १० अ० १७ )

सद्योजातमिति । 'सद्योजातम्' एतन्नामकपश्चिमवक्त्ररूपं परमेश्वरं 'प्रपद्यामि' प्राप्नोमि । तादृशाय 'सद्योजाताय वै नमः' अस्तु । हे सद्योजात 'भवे भवे' तत्तज्जन्मनिमित्तं 'मां' न 'भवस्व' न प्रेरय किं तर्हि 'अतिभवे' जन्मातिलङ्घननिमित्ते तत्त्वज्ञाने । 'भवोद्भवाय' संसारादुद्धर्त्रे सद्योजाताय नमोऽस्तु ।

वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः । ( तै० आ० प्र० १० अ० १८ )

वामदेवायेति । 'वामदेवाय' उत्तरवक्त्ररूपाय । तस्यैव विग्रहविशेषा ज्येष्ठाद्याः पीठदेवताः ।

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ।

( तै० आ० प्र० १० अ० १९ )

---

* इदं केनचित्संगृहीतम् । अस्य संग्रहकर्तुर्नाम न ज्ञायते ।

अघोरेभ्य इति । योऽयमघोरनामकदक्षिणवक्त्ररूपो देवस्तस्य विग्रहा अघोराः सात्त्विकत्वेन शान्ताः । अन्ये तु घोरा राजसत्वेनोग्राः । अपरे तु तामसत्वेन घोरादपि घोरतराः । हे 'सर्व' सर्वात्मक परमेश्वर 'ते' त्वदीयेभ्यः 'सर्वेभ्यः' पूर्वोक्तेभ्यस्त्रिविधेभ्यः शर्वेभ्यो 'रुद्ररूपेभ्यः' हिंसकेभ्यो रुद्राध्यायप्रतिपादितेभ्यो रुद्रेभ्यः सर्वेभ्यः सर्वतः सर्वदेशेषु कालेषु च वर्तमानेभ्यो नमोऽस्तु ।

तत्पुरुषाय विद्महे महादेवाय धीमहि ।

तन्नो रुद्रः प्रचोदयात् । (तै० आ० प्र० १० अ० २०)

तत्पुरुषायेति । प्राग्वक्त्रदेवस्तत्पुरुषनामकः । एतन्नामकप्राग्वक्त्ररूपाय । द्वितीयार्थे चतुर्थी । तत्पुरुषं देवं 'विद्महे' गुरुशास्त्रमुखाज्जानीमः । ज्ञात्वा च 'महादेवाय' तं महादेवं 'धीमहि' ध्यायेम । 'तत्' तस्मात्कारणात् 'रुद्रः' देवो 'नः' अस्मान् 'प्रचोदयात्' ध्यानज्ञानार्थं प्रेरयतु । लिङर्थे लेट् ।

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां

ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे

अस्तु सदाशिवोम् । (तै० आ० प्र० १० अ० २१)

ईशान इति । योऽयमीशाननामकोर्ध्ववक्त्ररूपो देवः सोऽयं 'सर्वविद्यानां' वेदशास्त्रादीनां चतुःषष्टिकलाविद्यानाम् । 'ईशानः' नियामकः । तथा 'सर्वभूतानाम्' अखिलप्राणिनाम् 'ईश्वरः' नियामकः, 'ब्रह्माधिपतिः' वेदस्याधिकत्वेन पालकः । तथा ब्रह्मणो हिरण्यगर्भस्याधिपतिः । तादृशो यो ब्रह्मा प्रवृद्धः परमात्मा सोऽयं 'मे' ममानुग्रहाय 'शिवः' शान्तः 'अस्तु' 'सदाशिवोम्' स एव सदाशिव ओमहं भवामि ।

अग्निरिति भस्म । वायुरिति भस्म । जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्वꣳ ह वा इदं भस्म । मन एतानि चक्षूꣳषि भस्मानि । (अथर्वशिरउपनिषत् । ख० ५)

अग्निरिति भस्मेत्यादीनामर्थ उक्तो मोडकाख्यैरभियुक्तैः । 'स्थलं' पृथ्वी । एवं चाग्न्यादीनि पञ्च महाभूतानि 'सर्वं' घटादि तत्कार्यं मनश्चक्षुरुपलक्षि-

तयावद्वृत्त्यात्मकज्ञानानि च 'भस्म' स्वतो भातीति भस्म ब्रह्म " भस्मविज्ञाननिष्ठस्य कर्तव्यं नास्ति किंचन " इति सूतसंहितोक्तेर्द्वैतस्य भासनाद्भञ्जनाद्वा भस्मशब्दितमद्वैतं ब्रह्मैव निखिलमपि सकारणं दृश्यमस्तीति भावयेदिति तात्पर्यम् । भस्माभिमन्त्रणे विनियोगस्तु लिङ्गाद्विधेरेव वा । 'ह वै' इति निपातौ प्रसिद्ध्यवधारणयोः । इतिशब्दपञ्चकं प्रत्येकं पञ्चानामपि भूतानां साकल्येन परामर्शार्थम् ।

मा नस्तोके तनये मा न आयुषि मा नो गोषु
मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र
भामितो वधीर्हविष्मन्तो नमसा विधेम ते ॥

( तै० आ० प्र० १० अ० ५२ )

मा नस्तोक इति । हे 'रुद्र नः' अस्मदीये तोकेऽपत्यमात्रे तनये विशेषतः पुत्रे मा रीरिषो हिंसां मा कुरु । नोऽस्मदीय आयुषि मा रीरिषः । नोऽस्मदीयेषु गोषु मा रीरिषः । नोऽस्मदीयेष्वश्वेषु मा रीरिषः । भामितः क्रुद्धः सन्नोऽस्मदीयान्वीरान्भृत्यान्मा वधीः । वयं हविष्मन्तो हविर्युक्तास्ते तुभ्यं नमसा नमस्कारेण विधेम परिचरेम ॥

प्रणवस्यार्थः पारिजाते—तस्य सोऽहमित्यजपामन्त्रप्रकृतिकत्वात्तच्छब्दप्रकृतिकेन स इतिशब्देन सच्चित्सुखात्मकं परं ब्रह्माभिधीयते । अहमिति सर्वसाक्षी प्रत्यगात्मा, तयोः सामानाधिकरण्येनैकत्वम् । एवं सत्यखण्डैकस्वभावं सच्चित्सुखात्मकं परं ब्रह्म निर्दिश्यते । स एव प्रणवार्थः । पतञ्जलिरपि—'तस्य वाचकः प्रणवः' तस्येश्वरस्य, इति योगसूत्रेणामुमेवार्थमाह ॥

अथ व्याहृतीनामर्थः—( तै० आ० प्र० १० अ० ३५ ) भूरादयः सत्यान्ता लोकप्रतिपादिकाः सप्त व्याहृतयः । तेषां च लोकानां प्रणवप्रतिपाद्यब्रह्मस्वरूपत्वविवक्षया प्रत्येकं प्रणवोच्चारणम् । उपलक्षणतया सप्ताधोलोका अपि ग्राह्याः । गायत्रीमन्त्रप्रतिपाद्यस्य ब्रह्मत्वविवक्षया तदादौ प्रणवोच्चारणम् । व्याहृतीनामवयवार्थः—भवन्ति अस्यां भूतानीति भूः । अधिकरणे क्विप् । भावयति प्रकाशयति विश्वमवकाशप्रदानेन स्थितिप्रदानेनेति वा भुवः । भुवोऽन्तर्भावितण्यर्थाद्सुनि गुणाभावश्छान्दसः, उवङादेशः । सुष्ठु अरणीयं प्राप्यं सुवः सुखमस्मिन्प्राप्यत इति वा सुवः । एवं चैतेषामर्थः प्रणवार्थ एव । मह पूजायां, सर्वेषां सर्वप्रकारैः पूज्यं महः । सर्गकाले सर्वं वियदादि स्वस्माज्जनयतीति

जनः । तप आलोचने, सर्वबोधयितृ सर्वज्ञं सर्वस्य प्रशास्तृत्वेन तापकं चेति तपः । सत्यमविपर्यस्तस्वभावम् । क्वचिद्देशे काले च केनापि प्रमाणेनाबाधितं सत्यम् । आसां सप्तव्याहृतीनां प्रत्येकं सत्तास्वभावादिरूपार्थस्योक्तत्वात्पर-मार्थतत्त्वप्रतिपादकत्वात्तादृशेन प्रणवेन प्रत्येकमभिसंबन्धः । एवं गायत्र्यर्थ-स्यापि प्रणवार्थेनैकत्वम् । तद्यथा—यः सविता नोऽस्माकं धियः प्रज्ञाः कर्माणि वा । धीशब्दस्य प्रज्ञानामसु कर्मनामसु च निघण्टुषु पाठात् । प्रचोदयात्प्रेर-यति, लेट् । तस्येत्यध्याहारः । सवितुः प्रेरकस्यान्तर्यामिणः । षु प्रसवैश्वर्ययो-रित्यस्य रूपम् । देवस्य प्रकाशमानस्य परमात्मनो वरेण्यं वरणीयं प्रार्थनीयं सुखै-कतानरूपं सर्वैः सुखस्यैव प्रार्थनीयत्वात् । भर्गः, भ्रस्ज पाक इत्यस्मादसुनि रूपं, संसारदाहकं तत् सर्वेषु वेदेषु लोकेषु च प्रसिद्धं ब्रह्मस्वरूपं धीमहि ध्यायामः । ध्यायतेर्लिङ्, आत्मनेपदं संप्रसारणं च च्छान्दसं, व्यत्ययेन शपो लुक् ।

अत्रायं संग्रहः—

बुद्धीः कर्माणि वाऽस्माकं यः प्रेरयति तस्य तु ।
देवस्य सवितुः ख्यातं वरेण्यं चिन्तये महः ॥

अथ शिरसोऽर्थः—आपो नदीसमुद्रादिगता ज्योतिरादित्यादिकं रसो मधु-राम्लादिः षड्विधोऽमृतं देवैः पातव्यम् । तत्सर्वमों प्रणवप्रतिपाद्यं ब्रह्मेति सूचयितुमादावोंकारः । भूरादित्रयस्याऽऽदरात्पुनरुक्तिः । अत्राऽऽपो ज्योति-रिति भूतद्वयोपादानं भूवाय्वाकाशानामुपलक्षणम् । ब्रह्म वेदः* । एवंभूत-स्यार्थस्य व्याहृतित्रयार्थेनैक्यमाह—भूरित्यादि । प्रणवव्याहृतिगायत्रीशि-रोभिः प्रतिपादितमखण्डैकरसस्वभावमर्थं परं ब्रह्मैवेत्यङ्गी करोति—ओमिति । अङ्गी कुर्वे ध्यायामीत्यर्थः ।

प्रातःसंध्या कुमारीति ध्यानार्थः स्पष्ट एव ।

गायत्र्या आवाहनमन्त्रमाह—आयात्विति [ तै० आ० प्र० १० अ० ३४ ] । वरदाऽस्मदभीष्टवरप्रदा देवी गायत्री छन्दोभिमानिनी देवताऽक्षरं विनाशरहितं संमितं सम्यग्वेदान्तप्रमाणनिश्चितं ब्रह्म जगत्का-रणं परं तत्त्वमुद्दिश्याऽऽयातु आगच्छतु, अस्माकं ब्रह्मतत्त्वं बोधयितु-मागच्छत्वित्यर्थः । अयमेवार्थ उत्तरार्धेन स्पष्टी क्रियते—छन्दसां गाय-त्रीत्रिष्टुबादीनां वेदानां वा माता जननी देवता गायत्री गायत्रीशब्दाभिधेया मे ममेदं ब्रह्म वेदान्तप्रतिपाद्यं तत्त्वं जुषस्व जोषयतूपदिशत्वित्यर्थः ॥

---

* पारिजाते तु आप्नोतीत्यापोऽखण्डसत्तास्वरूपेण सर्वव्यापकः । स एव स्वयंप्रकाशना-ज्ज्योतिः । स एव रस आनन्दस्वभावः । अमृतं तदेवामरणधर्मकं ब्रह्म तदेव देशतः कालतो वस्तु-तश्चानवच्छिन्नम् ।

यदह्नादिति (तै० आ० प्र० १० अ० ३४)। किंच हे संध्याविद्ये सायंप्रातःसंधौ भवा संध्या तादृशी या विद्याऽनुष्ठानरूपा तत्संबुद्धौ संध्याविद्ये सरस्वति त्वद्भक्तो यदह्नाद्यस्मिन्नहनि पापं कुरुते तदह्नात्तस्मिन्नहनि तेन पापेन प्रतिमुच्यते विमुच्यतां शुद्धो भूयादिति भावः। यद्रात्रियाद्यस्यां रात्रौ तद्रात्रियात्तस्यां रात्रौ। अन्यत्समानम्। एते छान्दसाः प्रयोगाः। सर्ववर्णे महादेवीति विशेषणे।

गायत्र्या आवाहनमन्त्रमाह—ओजोऽसीति। [तै० आ० प्र० १० अ० ३५]। हे गायत्रि त्वमोजोऽसि बलहेतुभूताष्टमधातुरूपाऽसि, सहोऽसि शत्रूणामभिभवनशक्तिरसि, बलमसि शरीरगतव्यवहारसामर्थ्यरूपाऽसि, भ्राजोऽसि दीप्तिरूपाऽसि, देवानामग्न्यादीनां धाम तेजो यदस्ति तन्नामाऽसि तदेव त्वन्नामेत्यर्थः। देवानां धामासीत्यर्थः। विश्वं सर्वजगद्रूपं त्वमेवासि, विश्वायुः संपूर्णायुःस्वरूपाऽसि। उक्तस्यैव व्याख्यानं सर्वमसि सर्वायुरिति। अभिभूः सर्वस्य पापस्य तिरस्कारहेतुः, ॐ प्रणवप्रतिपाद्यपरमात्माऽसि। तादृशीं गायत्रीं मदीये मनस्येवाऽऽवाहयामि। अन्यत्स्पष्टम्।

आपो हि ष्ठेति (तै० आ० प्र० १० अ० १)। हि ष्ठेत्यत्र हि स्थेति पदच्छेदः। हे आपो हि यस्मात्कारणाद्या यूयं मयोभुवः स्थ स्नानपानादिहेतुत्वेन सुखप्रापयित्र्यो भवथ तस्मात्कारणाद्यूयं नो युष्मद्भक्तानस्मान्दधातन पोषयत। कस्मै प्रयोजनाय, चक्षसे परमात्मदर्शनाय। कथंभूताय, रणाय रमणीयाय। तथा मह्यते पूज्यत इति मट् तस्मै महे मोक्षरूपफलत्वान्महते भुक्तिमुक्तिप्रयोजनायास्मान्पोषयत। अन्यथा जीवनं व्यर्थमित्यभिप्रायः।

किंच हे आपो वो युष्माकं यः शिवतमः कल्याणतमो माधुर्यलक्षणो रसोऽस्ति तस्येहास्यां भुवि विद्यमानान्नोऽस्मान्भाजयत पात्रयत स्थानं कुरुतेत्यर्थः। यथा भाजने जलं तिष्ठति तथा युष्मदीयो रसोऽस्मासु तिष्ठत्विति भावः। अत्र निदर्शनं प्रदर्शयति—इव यथा मातरः स्वापत्यमुत्तमं गुडादि प्राशयन्ति तथा। कथंभूता उशतीरुशत्योऽपत्यवृद्धिं कामयमानाः पुत्रदुहित्रादिस्नेहवत्य इति यावत्॥

किंच हे आपो वो युष्मान्वयमरमत्यर्थं शरणं गमाम प्राप्नुमः। कस्मै प्रयोजनाय शरणीकरणं यस्यास्मदीयस्य पापजालस्य क्षयाय विप्रणाशाय यूयं जिन्वथ प्रीतिं कुरुथ तस्मै तत्क्षयार्थमेव युष्माभिरपि भक्तत्वादस्मत्पापक्षयार्थमेव यत्नः क्रियते, अस्माभिरप्येतदर्थमेव युष्मच्छरणं क्रियतेऽन्यथा कथमस्मत्पाप-

क्षयार्थं युष्माभिरुद्यम्यतामित्यभिप्रायः । किंच भो अब्देवता नोऽस्माञ्जनयथ पुत्रदुहित्रादिजननसमर्थान्कुरुथ ।

आपो वा इदꣳ सर्वं विश्वा भूतान्यापः प्राणो वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दाꣳस्यापो ज्योतीꣳष्यापो यजूꣳष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवः सुवराप ॐ ॥

(तै० आ० प्र० १० अ० २९)

आपो वा इदमिति । यदिदं जगदस्ति तत्सर्वमापो वै जलमेव । कथमिति प्रपञ्च्यते विश्वा भूतानि सर्वाणि प्राणिशरीराण्यापो जलं रेतोरूपेण तदुत्पादकत्वात् । प्राणा वै शरीरवर्तिवायवोऽप्यापः । उदकेन प्राणानामाप्यायनात् । अत एव च्छन्दोगा आमनन्ति—' आपोमयः प्राणो न पिबतो विच्छेत्स्यते ' इति । पशवो गवादयोऽप्यापः क्षीररूपेण तत्र परिणतत्वात् । अन्नं व्रीहियवादिकमापः । जलस्यान्नहेतुत्वं प्रसिद्धम् । अमृतमापः सम्यग्जायत इति सूत्रात्मा हिरण्यगर्भः सम्राट् । विस्पष्टं राजत इति ब्रह्माण्डदेहः पुरुषो विराट् । इन्द्रियादिनैरपेक्ष्येण स्वयमेव राजत इत्यव्याकृताभिमानीश्वरः स्वराट् । छन्दांसि गायत्र्यादीनि । ज्योतींष्यादित्यादीनि । यजूंषि अनियताक्षरा मन्त्राः । सत्यं यथार्थकथनम् । सर्वा देवता इन्द्रादयः । भूर्भुवः सुवस्त्रयो लोकाः । सम्राडादिलोकत्रयान्तार्थरूपेणाऽऽपः स्तूयन्ते । अतश्चाऽऽपो मूलकारणं परमात्मरूपेण प्रणवप्रतिपाद्या इति वक्तुमोंकारः पठितः ॥

प्रातःसंध्याकाले जलपानार्थं मन्त्रमाह—सूर्यश्चेति (तै० आ० प्र० १० अ० ३२) । सूर्योऽहर्निष्पादकः सूर्योपाधिकः । यश्च मन्युः क्रोधाभिमानी देवः । ये च मन्युपतयः क्रोधस्वामिनस्तस्मिन्नियामका देवाः सन्ति ते सर्वेऽपि मन्युकृतेभ्यो मदीयकोपनिष्पादितेभ्यः पापेभ्यो रक्षन्तां पापिनं मां तत्पापविनाशनेन पालयन्तु । किंच—अतीतया रात्र्या तस्यां रात्र्यां यत्पापमकार्षं कृतवानस्मि । केन साधनेन मनआदिभिः शिश्नान्तावयवैः । तत्सर्वं पापं रात्रिरवलुम्पतु रात्र्यभिमानी देवो विनाशयतु । परहिंसादिचिन्तनं मानसं पापम् । अनृतादिभाषणं वाचिकम् । अभिचारहोमादिकं हस्तकृतम् । पादेन गोब्राह्मणस्पर्शादिकं

पादकृतम् । अभोज्यभोजनमुदरकृतम् । अगम्यागमनं शिश्नकृतम् । अथवा किमनेन परिमितगणनेन यत्किमपि दुरितं निष्पन्नमिदं पापजातं सर्वं तत्कर्तारं मां च लिंगशरीररूपममृतयोनौ मरणरहिते जगत्कारणे सूर्येऽहर्निष्पादके सूर्योपाधिके ज्योतिषि स्वयंप्रकाशे वस्तुनि जुहोमि प्रक्षिपामि अहमनेन होमेन तत्सर्वं भस्मी करोमि । तदर्थमभिमन्त्रितं जलं स्वाहा मदीयमुखाग्नौ हुतमस्तु ॥

दधिक्राव्ण इति ( तै० सं० का० १ प्र० ५ अ० ११ ) । दधि क्रावति प्राप्नोतीति दधिक्रावा दधिप्रियः कश्चिद्देवविशेषः । अग्निरित्यन्ये । तस्य देवस्याकारिषमहं कर्म कृतवानस्मि । कीदृशस्य जिष्णोर्जयशीलस्याश्वस्य व्यापिनो वाजिनोऽन्नवतः । स देवो नोऽस्माकं मुखा मुखं सुरभि करत् कर्पूरादिद्रव्यप्रदानेन सुगन्धोपेतं करोतु । अस्माकमायूंषि च प्रतारिषत् प्रवर्धयतु ॥

आपो हि ष्ठा मयोभुवः० न । महे० से । यो वः शिव० नः । उशती० रः । तस्मा अरं ग० थ । आपो जन० च नः । एते मन्त्राः पूर्वं व्याख्याताः ॥

हिरण्येति ( तै० सं० का० ५ प्र० ६ अ० १ ) । हिरण्यवर्णा निर्मलत्वेन भास्वरत्वाद्धिरण्यसदृशवर्णोपेताः । तथा शुचयः स्वयंशुद्धाः पावकाः स्नानादिना शरीरादिशुद्धिहेतवश्च । यास्वप्सु कश्यपाख्यः प्रजापतिरुत्पन्नः । यास्वप्सु इन्द्रोऽप्युत्पन्नः । अग्निं च या आपो गर्भत्वेन दधिरे । एतत्त्रयं शाखान्तरेभ्यो द्रष्टव्यम् । अत्राप्यग्नेर्भो अपामसीति चतुर्थकाण्डे मन्त्रान्ते समाम्नातम् । विरूपास्ता आपः स्योनाः सुखकारिण्यः । अतो नोऽस्माञ्शं भवन्तु सुखं प्रापयन्तु ॥

यासाꣳ राजेति ( तै० सं० का० ५ प्र० ६ अ० १ ) । वरुणाख्यो राजाऽपामधिपतिर्यासामपां मध्ये याति गूढः संचरति । किं कुर्वन्, जनानां सत्यानृते अवपश्यन् स्नानपानादौ यो यथाशास्त्रमाचरति तत्सर्वमवपश्यन् । ताश्चाऽऽपो मधु रसं श्चोतन्ति स्रावयन्ति ता मधुश्चुतः । शुचय इत्यादि पूर्ववत् ॥

यासां देवा इति ( तै० सं० का० ५ प्र० ६ अ० १ ) । दिवि द्युलोके देवा यासामपां संबन्धि सारं भक्षं कृण्वन्ति स्वभोज्यं कुर्वन्ति । पीयूषं देवैः सेव्यते तच्चापां सारभूतम् । याश्चाऽऽपोऽन्तरिक्षे वृष्टिधारारूपेण बहुधा बहुप्रकारा भवन्ति, याश्चाऽऽपः पृथिवीं सर्वां पयसा स्वकीयेन द्रवेणोन्दन्ति क्लेदयन्ति शुक्रा निर्मलाः, ता न आप इत्यादि पूर्ववत् ॥

शिवेनेति ( तै० सं० का० ५ प्र० ६ अ० १ ) । हे आपो यूयं शिवेन चक्षुषा शान्तया दृष्ट्या मा पश्यत मामवलोकयत । तथा शिवया तनुवा शान्तेन युष्मदीयशरीरेण मे त्वचमुपस्पृशत । अहमपि अप्सुषदो जलेषु स्थितान्सर्वानपि

अग्नीन्हुवे जुहोमि होमेन तर्पयामि । वो युष्मदीयं यद्वर्चः कान्तिः, यच्च बलं, यदप्योजो बलहेतुरष्टमो धातुस्तत्सर्वं मयि निधत्त स्थापयत ॥

पवमानः सुवर्जनः । पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ॥ (तै० ब्रा० का० १ प्र० ४ अ० ८)

पवमान इति । यो देवः पोता सर्वेषां शोधयिता स देवः पवित्रेण शुद्धिसाधनेनास्मदीयजपध्यानादिना मा मां पुनातु शोधयतु । कीदृशः पोता पवमानः शोधनकुशलः सुवर्जनः स्वर्गे एवोत्पन्नः । विचर्षणिर्विविधशोधनप्रकाराभिज्ञः ॥

पुनन्तु मा देवजनाः । पुनन्तु मनवो धिया । पुनन्तु विश्वं आयवः ॥ (तै० ब्रा० का० १ प्र० ४ अ० ८)

पुनन्तु मा देवेति । ये कल्पादौ स्वर्गलोकेषु समुत्पन्नत्वेन देवरूपा जनाः, ये च स्वायंभुवमनुप्रभृतय ऋषयः, येऽपि स्वकर्मवशान्मनुष्यलोकमायन्तीत्यायवः सदाचारपराः शुश्रुवांसः, ते विश्वे सर्वेऽपि धियाऽनुग्रहबुद्ध्या मां पुनन्तु ॥

जातवेदः पवित्रवत् । पवित्रेण पुनाहि मा । शुक्रेण देव दीद्यत् । अग्ने क्रत्वा क्रतूंरनु ॥

(तै० ब्रा० का० १ प्र० ४ अ० ८)

जातवेद इति । हे जातवेद उत्पन्नसर्वजगदभिज्ञाग्ने देव शुक्रेण दीप्त्या दीद्यद्भासमानस्त्वं क्रतूननु अस्मदनुष्ठेयान्कर्मविशेषाननुसृत्य पवित्रेण क्रत्वा शोधकेन त्वत्संकल्पेन पवित्रवदस्मदनुष्ठितं कर्म शुद्धियुक्तं यथा भवति तथा मां पुनीहि शोधय ॥

यत्ते पवित्रमर्चिषि । अग्ने विततमन्तरा । ब्रह्म तेन पुनीमहे ॥ (तै० ब्रा० का० १ प्र० ४ अ० ८)

यत्ते पवित्रमिति । हेऽग्ने ते तवार्चिषि ज्वालायामन्तरा मध्ये विततं विस्तृतं यत्पवित्रं शुद्धिसाधनं ब्रह्म प्रवृद्धमस्ति तेन वयं पुनीमहे ॥

उभाभ्यां देव सवितः । पवित्रेण सवेन च । इदं ब्रह्म पुनीमहे ॥ (तै० ब्रा० का० १ प्र० ४ अ० ८)

उभाभ्यामिति । हे सवितर्देव त्वदीयं यत्पवित्रं शुद्धिसाधनम्, यश्च सवः कर्मसु अस्मद्विषयं प्रेरणं ताभ्यामुभाभ्यामिदं ब्रह्म प्रवृद्धं कर्म पुनीमहे शोधयामः ॥

वैश्वदेवी पुनती देव्यागात् । यस्यै बह्वीस्तनुवो वीतपृष्ठाः । तया मदन्तः सधमाद्येषु । वयꣳ स्याम पतयो रयीणाम् ॥

(तै० ब्रा० का० १ प्र० ४ अ० ८)

वैश्वदेवीति । सर्वदेवसंबन्धिनी या देवी शोधनकुशला साऽस्मान्पुनती शोधयन्ती, आगादागच्छतु यस्यै यस्या देव्यास्तनुवः शुद्धिहेतवो देहविशेषा वीतपृष्ठाः कान्तस्तुतयः, तया देव्याऽनुगृहीताः सधमाद्येषु ऋत्विग्भिः सह हर्षयोग्येषु कर्मसु मदन्तो हृष्यन्तो वयं रयीणां धनानां पतयः स्याम ॥

वैश्वानरो रश्मिभिर्मा पुनातु । वातः प्राणेनेषिरो मयोभूः । द्यावापृथिवी पयसा पयोभिः । ऋतावरी यज्ञिये मा पुनीताम् ॥

(तै० ब्रा० का० १ प्र० ४ अ० ८)

वैश्वानरो रश्मिभिरिति । विश्वेषां नराणां हितोऽग्निरादित्यो वा देवः स्वकीयरश्मिभिर्मा पुनातु । वातो वायुदेवः प्राणेनेषिरः प्राणरूपेण देवेषु गच्छन्मयोभूः सुखस्य भावयिता भवतु । द्यावापृथिव्यौ च ऋतावरी सत्यवत्यौ यज्ञिये यज्ञाय हिते सत्यौ पयसा जलेन पयोभिः क्षीरादिरसैश्च मां पुनीताम् ॥

बृहद्भिः सवितस्तृभिः । वर्षिष्ठैर्देव मन्मभिः । अग्ने दक्षैः पुनाहि मा ॥ (तै० ब्रा० का० १ प्र० ४ अ० ८)

बृहद्भिरिति । हे सवितः कर्मसु प्रेरकाग्ने देव मन्मभिर्मननैरस्मदनुग्रहविषयैर्मा पुनाहि पुनीहि । बृहद्भिर्महद्भिरादरयुक्तैस्तृभिः पापतरणसाधनैर्वर्षिष्ठैश्चिरकालानुवृद्धतमैर्दक्षैः शोधनकुशलैः ॥

येन देवा अपुनत । येनाऽऽपो दिव्यंकशः । तेन दिव्येन ब्रह्मणा । इदं ब्रह्म पुनीमहे ॥

(तै० ब्रा० का० १ प्र० ४ अ० ८)

येन देवा इति । येन शुद्धिसाधनेन देवाः पूर्वान्यजमानानपुनत । कश गताविति धातोरुत्पन्नः कशशब्दो गतिवाची शकारान्तः । येन शुद्धिसाधनेनाऽऽपो देवता दिव्यंकशोऽपुनत द्युलोकविषयां गतिं शोधितवन्तः, दिव्येन द्युलोकयोग्येन ब्रह्मणा परिवृढेन तेन शुद्धिसाधनेनेदं ब्रह्मानुष्ठीयमानं परिवृढं कर्म पुनीमहे ॥

यः पा॑वमा॒नीर॒ध्येति॑ । ऋषि॑भि॒ः संभृ॑त॒ꣳ रस॑म् ।
सर्व॒ꣳ स पू॒तम॑श्नाति । स्व॒दि॒तं मा॑त॒रिश्व॑ना ॥

( तै० ब्रा०-का० १ प्र० ४ अ० ८ )

यः पावमानीरिति । यः पुमान्पावमानीः शोधकदेवतासंबन्धिनीरेता ऋचोऽध्येति पठति अर्थतः स्मरति स पुरुषः सर्वं रसं संसारभूतं फलमश्नाति भुङ्क्ते । कीदृशं रसम्, ऋषिभिः संभृतं मन्त्रैस्तदभिज्ञैर्मुनिभिः संपादितम् । अत एव शुद्धं मातरिश्वना वायुना स्वदितं स्वादूकृतम् ॥

पा॒व॒मा॒नीर्यो॑ अ॒ध्येति॑ । ऋषि॑भि॒ः संभृ॑त॒ꣳ रस॑म् ।
तस्मै॒ सर॑स्वती दुहे । क्षी॒रꣳ स॒र्पिर्मधू॑द॒कम् ॥

( तै० ब्रा० का० १ प्र० ४ अ० ८ )

पावमानीर्यो अध्येतीति । यः पावमानीरध्येति तस्मै पुरुषाय सरस्वती रसं दुहे । कीदृशम्, ऋषिभिः संभृतम् । पुनः कीदृशं, क्षीरादिरूपं क्षीरं सर्पिर्मधूदकमिति रसम् ॥

पा॒व॒मा॒नीः स्व॒स्त्यय॑नीः । सु॒दुघा॒ हि पय॑स्वतीः ।
ऋषि॑भि॒ः संभृ॑तो॒ रस॑ः । ब्रा॒ह्मणे॒ष्वमृ॑त॒ꣳ हि॒तम् ॥

( तै० ब्रा० का० १ प्र० ४ अ० ८ )

पावमानीरिति । याः पावमान्य ऋचस्ताः स्वस्त्ययनीः क्षेमप्रापिकाः सुदुघाः सुष्ठु फलं दुहानाः पयस्वतीः क्षीरादिरसहेतवश्च प्रसिद्धास्ता अस्माननुगृह्णन्त्विति शेषः । ऋषिभिर्मन्त्रदर्शिभिर्मुनिभी रसः फलसारः संभृतोऽस्मासु संपादितोऽस्तु । ब्रह्म मन्त्रास्तत्पाठका ब्राह्मणास्तेष्वस्मासु अमृतमविनाशि फलं हितं संपादितमस्तु ॥

पा॒व॒मा॒नीर्दि॑शन्तु नः । इ॒मं लो॒कमथो॑ अ॒मुम् ।

कामान्त्समर्धयन्तु नः। देवीर्देवैः समाभृताः॥

(तै० ब्रा० का० १ प्र० ४ अ० ८)

पावमानीरिति। देवैरिन्द्रादिभिः समाभृताः संपादिताः पावमानीर्देवीः पवमानमन्त्राभिमानिन्यो देव्यो नोऽस्माकं लोकद्वयं दिशन्तु प्रयच्छन्तु तत्रत्यान्कामान्नोऽस्मदर्थं समर्धयन्तु समृद्धान्कुर्वन्तु॥

पावमानीः स्वस्त्ययनीः। सुदुघा हि घृतश्चुतः।
ऋषिभिः संभृतो रसः। ब्राह्मणेष्वमृतꣳ हितम्॥

(तै० ब्रा० का० १ प्र० ४ अ० ८)

पावमानीरिति। पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुत इति पूर्ववत्॥

येन देवाः पवित्रेण। आत्मानं पुनते सदा।
तेन सहस्रधारेण। पावमान्यः पुनन्तु मा॥

(तै० ब्रा० का० १ प्र० ४ अ० ८)

येन देवा इति। देवा इन्द्राद्या येन पवित्रेण शुद्धिसाधनेन सदाऽऽत्मानं स्वदेहं पुनते शोधयन्ति। सहस्रधारेण सहस्रावान्तरभेदयुक्तेन तेन साधनेन पावमान्य ऋचो मा मां पुनन्तु॥

प्राजापत्यं पवित्रम्। शतोद्यामꣳ हिरण्मयम्।
तेन ब्रह्मविदो वयम्। पूतं ब्रह्म पुनीमहे॥

(तै० ब्रा० का० १ प्र० ४ अ० ८)

प्राजापत्यमिति। यत्पवित्रं शुद्धिसाधनं प्राजापत्यं प्रजापतिसंबन्धि शतोद्यामं दर्भैर्निर्मितत्वाच्छतसंख्याकैरुद्यामैर्नाडीभिर्युक्तं हिरण्मयं पापहरणसाधनेन द्रव्येण निर्मितं तेन तादृशेन पवित्रेण ब्रह्मविदो वेदार्थविदो वयं पूतं ब्रह्म पूर्वमपि शुद्धं परिदृढं कर्म पुनीमहे भूयोऽपि शोधयामः॥

इन्द्रः सुनीती सह मा पुनातु। सोमः स्वस्त्या
वरुणः समीच्या। यमो राजा प्रमृणाभिः
पुनातु मा। जातवेदा मोर्जयन्त्या पुनातु॥

(तै० ब्रा० का० १ प्र० ४ अ० ८)

इन्द्र इति । इन्द्रः सुनीत्या शोभनफलप्रापिकया देव्या सह मा मां पुनातु । सोमः स्वस्त्या क्षेमप्रापिकया देव्या सह मां पुनातु । वरुणः समीच्याऽनुकूलया देव्या सह, यमो राजा प्रमृणाभिः प्रकर्षेण मारिकाभिर्देवीभिः सह, जातवेदा ऊर्जयन्त्या क्षीरादिरसप्रापिकया देव्या सह मां पुनातु ॥

द्रुपदादिवेति ( तै० ब्रा० का० २ प्र० ६ अ० ६ )। राजानोऽपराधिनः पादे सच्छिद्रे काष्ठे कीलयन्ति तद्द्रुपदं द्रुपदात्पादबन्धनान्मुमुचान इव मुक्तवानिव । छन्दसि लिटः कानज्वेति कानचि द्वित्वादि । स यथा चौर्याद्यभियोगं परित्यज्य शुद्ध इत्येव व्यवह्रियते तद्वत्स्विन्नः स्वेदव्याप्तगात्रः स्नात्वी स्नात्वेत्यर्थे, 'स्नात्व्यादयश्च' इतीदन्तत्वं छान्दसम् । मलान्मुमुचान इव स यथा स्नात्वा मलान्मुच्यते तद्वदापो मा मामेनसः पापाच्छुन्धन्तु शुद्धं कुर्वन्तु । अर्घ्यमन्त्रस्तु व्याख्यातः ॥

गायत्रिया गायत्री छन्दो० विनियोगः ( तै० आ० प्र० १० अ० ३५ )। स्पष्टार्थमेतत् ॥

ॐ भूः, ॐ भुवः, ॐ᳚सुवः, ( तै० आ० प्र० १० अ० ३५ )

पूर्वं व्याख्यातमेतत् ।

अथोपस्थानम् ।

मित्रस्येति ( तै० सं० का० ३ प्र० ४ अ० ११ )। चर्षणीधृतो मनुष्याणां धारयितुर्मित्रस्य देवस्य श्रवः श्रोतुं योग्यं यशो महदस्तीति शेषः ॥ सानसिं फलदानशीलं सत्यं सत्यवादिनं चित्रश्रवस्तमं चित्रं श्रवः कीर्तिर्यस्यातिशयेन तादृशं तं यजामह इति शेषः ॥

मित्रो जनानिति ( तै० सं० का० ३ प्र० ४ अ० ११ )। अयं मित्रो देवो जनान्सर्वान्यातयति स्वस्वव्यापारेषु प्रयत्नयुक्तान्करोति । किंच प्रजानंस्तत्तदधिकारं विद्वान् । किंच मित्रः पृथिवीं दाधार धृतवान् । उतापि च द्यां दाधार । किंच मित्रः कृष्टीर्मनुष्याननिमिषा देवांश्चाभिचष्टे सर्वतः पश्यति सत्यायामोघफलाय तस्मै मित्राय हव्यं चरुलक्षणं घृतवद्घृतयुक्तं विधेम कुर्मः ।

प्र स मित्रेति ( तै० सं० का० ३ प्र० ४ अ० ११ )। हे आदित्य यो यजमानस्तव संबन्धिना व्रतेन कर्मणा शिक्षति अनुष्ठातुं शक्तो भवितुमिच्छति, हे मित्र स मर्तः स मनुष्यो यजमानः प्रयस्वान् कर्मफलयुक्तः प्रकर्षेणास्तु त्वोतस्त्वया रक्षितः स यजमानो न हन्यते रोगादिना न पीड्यते न जीयते वैरिभिर्नाभिभूयते । अपि च त्वया रक्षितमेनं यजमानमंहः पाप्माऽन्तितः समीपे नाश्नोति न व्याप्नोति दूराद्दूरेऽपि न व्याप्नोति ॥

यच्चिद्धि त इति ( तै० सं० का० ३ प्र० ४ अ० ११ ) । हे वरुण देव ते त्वदीयं यच्चिद्व्रतं यत्किंचिदपि कर्म द्यवि द्यवि दिने दिने प्रकर्षेण मिनीमसि तर्कयामहे । तत्र दृष्टान्तः—विशो यथा सर्वाः प्रजाः स्वस्वव्यापारं यथा तर्कयन्ति तद्वत् । हि यस्मात्त्वदीयमेव कर्म सर्वदा तर्कयामस्तस्मात्त्वां परिचरेमेति शेषः ॥

यत्किंचेति ( तै० सं० का० ३ प्र० ४ अ० ११ ) । हे वरुण मनुष्या वयं दैव्ये देवलोकवर्तिनि जने यत्किंचेदमभिद्रोहं स्वल्पमधिकं वा द्रोहमचित्ती, अज्ञानेन चरामसि कुर्मः । किंच यदपि तव धर्मा त्वदीयं कर्म युयोपिम विनाशयाम । हे देव तस्मादेनसो द्रोहात्कर्मनाशाच्च नोऽस्मान्मा रिरीषो हिंसां मा कृथाः ॥

कितवास इति ( तै० सं० का० ३ प्र० ४ अ० ११ ) । कितवासो धूर्तसमानाः स्वार्थसाधनपरा ऋत्विजो यत्कर्माङ्गं रिरिपुर्नाशितवन्तो न दीवि न तु देवने सम्यग्व्यवहृतौ प्रावर्तन्त । वाऽथवा यत्पापं सत्यमवश्यं कृतं ज्ञात्वैव कृतमित्यर्थः । घशब्दः पादपूरणे पापवाचको वा निपातः । यद्घ सत्यमित्यन्वयः । उतापि च यन्न विद्म यत्पापमज्ञानेन कृतमित्यर्थः । सर्वास्ता ऋत्विग्भिर्विनाशितमङ्गं ज्ञात्वा कृतमज्ञानेन कृतमिति यानि सन्ति तानि सर्वाणि शिथिरेव शिथिलानीव विष्य विनाशयेत्यर्थः । अथानन्तरं हे वरुण ते तव प्रियासः स्याम प्रिया भवेम ॥

**या॒ः सदा॑ सर्व॑भू॒ता॒नि॒० च । सा॒यं॒ प्रा॒० नमः॑ ॥**

स्पष्टार्थोऽयम् ।

**नमः प्राच्यै दिशे याश्च देवता० नमः ।**

( तै० आ० प्र० २ अ० २० )

अयमपि स्पष्टार्थः ।

**उत्तमे शिखरे जाते भूम्यां० र्धनि । ब्राह्मणेभ्यो० यथासुखम् ।** ( तै० आ० प्र० १० अ० ३६ )

गायत्रीदेवताविसर्जनमन्त्रमाह—उत्तमे शिखर इति । भूम्यामास्थितो यः पर्वतो मेरुनामकस्तस्य मूर्धन्युपरिभागे यदुत्तमं शिख[*रं पुराणेषु प्रसिद्धं

---

* क्वचित्तु जात इत्यस्य स्थाने देवीति पाठः । एतत्पाठे धनुश्चिह्नान्तर्गतस्थाने ' रमस्ति तस्मिन्निदं गायत्री देवी तिष्ठति । तस्मात्कारणात्, हे देवि ब्राह्मणेभ्यस्त्वदुपासकेभ्यस्त्वदनुग्रहेण परितुष्टेभ्योऽनुज्ञानमभिव्याप्य यथासुखं स्वकीयसुखमनतिक्रम्य स्वस्थान उत्तमे शिखरे गच्छ' । इति ज्ञेयम् ।

तदुपलक्षितं यदादित्यमण्डलमस्ति हे देवि गायत्रि तत्र गच्छ । कदा जाते त्वदुपासनात्मके संध्याख्ये कर्मणि समाप्ते सति । कीदृशी त्वं ब्राह्मणेभ्यो ब्राह्मणैः, विभक्तिव्यत्ययः । त्वदुपासकैरभ्यनुज्ञाताऽऽभिमुख्येनाञ्जलिकरणपूर्वकमनुज्ञाता गन्तव्यमिति प्रार्थिता । कथं यथासुखं यथेच्छम् । ]

स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने

द्विजाता । आयुः पृथिव्यां द्रविणं ब्रह्म

वर्चसं मह्यं दत्त्वा प्रजातुं ब्रह्मलोकम् ॥

( तै० आ० प्र० १० अ० ३६ )

स्तुतो मयेति । पूर्वस्मिन्मन्त्रेऽपरोक्षतयोक्तोऽर्थोऽस्मिन्मन्त्रे परोक्षतया स्पष्टी क्रियते । अत्रेदं वैदिकरहस्यं ब्रह्मलोक आदित्यमण्डलं चोभयमपि गायत्र्याः स्थानं विकल्पेनान्यतरदिति केचिदाचक्षते । अत एवास्माभिः पूर्वस्मिन्मन्त्रेऽनुक्तमप्यादित्यमण्डलं गायत्रीनिवासत्वेन मत्वाऽध्याहृत्य व्याख्यातम् । एतस्मिंस्तु मन्त्रे स्वयमेव भगवत्या गायत्र्या वसतित्वेन ब्रह्मलोकं ब्रवीति । तथाचेत्थं व्याख्या तत्र भवति—भगवती गायत्री ब्रह्मलोकं ब्रह्मणो भारतीपतेर्लोकं प्रयात्विति वाक्यशेषः । कीदृशं ब्रह्मलोकम्, अतलादिभ्योऽधस्तनेभ्यो भूरादिभ्य ऊर्ध्वतमेभ्यः समस्तेभ्यो लोकेभ्यः प्रकृष्टत्वेन जातं परमात्मनः सकाशादुत्पन्नमिति । प्रजातुमिति प्रयोगश्छान्दसः । किं कृत्वा दत्त्वा । किं किम्, आयुः शताब्दात्मकमुपजीवनम् । पुनर्द्रविणं सुवर्णमणियुक्तम् । पुनर्ब्रह्मवर्चसं स्वाध्यायाध्ययनतदर्थविचारतदर्थानुष्ठानानुष्ठापनैर्जनितं मुख्यं तेजः । यद्दृष्ट्वा लोका आचक्षते देदीप्यमानोऽयं साक्षाज्ज्वलन्निव पावक इति । कस्मै मह्यम् । कथंभूताय पृथिव्यां विद्यमानाय । कथंभूता गायत्री द्विजाता द्विजातिभिस्त्रैवर्णिकैरुपास्यमाना । यद्वा द्वयोः सूर्यमण्डलयोर्जाता प्रादुर्भूता । जनी प्रादुर्भावे । अस्माभिष्टाप्रत्ययः । पुनः कथंभूता प्रचोदयन्ती, अन्तर्यामिरूपेण प्राणिमात्रस्य प्रेरयित्री । अत्र लुप्तोपमोपादानम् । पवने व्यत्ययेन पवनः । यथा प्राणवायुश्चतुर्विधं प्राणिजातं प्रेरयतीतस्ततो गमनागमनादिकं कारयति तथेति । तथा वेदमाता चतुर्णां वेदानां जननी वरान्स्वोपासकेभ्यो वाञ्छितार्थान्ददातीति वरदा । कथंभूता सती मयोपासकेन स्तुतो बहुलग्रहणाद्व्यत्ययेन स्तुता सतीत्यर्थः ॥

घृणिः सूर्य आदित्यो न प्रभा वात्यक्षरम् ।
मधु क्षरन्ति तद्रसम् । सत्यं वै तद्रसमापो ज्योती
रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम् ।

(तै० आ० प्र० १० अ० ३७)

घृणिः सूर्येति । भगवानादित्यो वाति वैहायसेन मार्गेणाहर्दिवं गच्छति लोकानुपकर्तुम् । किंविधः । जगत्प्रसवहेतुत्वात्सूर्यः । दीप्तिमत्त्वाद्घृणिः । क्षरणराहित्येन नित्यत्वादक्षरमक्षरः । केव प्रभेव । नकार उपमार्थः । आदित्यसंबन्धिनी प्रभेव । आदित्यस्योपमानान्तराभावात् । स्वप्रभा गोलकीभूय व्योममार्गेण गच्छति चेद्यथा तथा प्रभावानयमित्यभूतार्थमुपमानम् । अपि च तद्रसं तस्मात्पूर्वोक्तादादित्याज्जन्यं रसमुदकं मधु मधुरं यथा तथा क्षरन्ति नद्यो वहन्ति । आदित्यलब्धवृष्ट्युदकमेव नद्यो वहन्ति, अन्यथा भूमावुदकाभाव इति भावः । उत्तरार्धेनाऽऽदित्यब्रह्मणः सर्वात्मकत्वमुच्यते—तदादित्यलक्षणं ब्रह्म सत्यं यथार्थभाषणं रसं मधुरादिरसजातम् । आपः सिन्धुनद्यादिगतमम्भः, ज्योतिश्चन्द्राग्न्यादि, रसः पदार्थमात्रसारः, अमृतं सुधा, ब्रह्म त्रयी विद्या, भूर्भुवः सुवस्त्रय इमे लोकाः, ओमोंकारः । वै, एतत्सर्वमादित्य एवेति मनसा विभावयेदिति भावः ।

वषट्ते विष्णवास आ कृणोमि तन्मे जुषस्व
शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो
गिरो मे यूयं पात स्वस्तिभिः सदा नः ।

(तै० सं० का० २ प्र० २ अ० १२)

वषट्त इति । अस्यते क्षिप्यते कर्मानुष्ठानाय देवतया विधिना वा प्रेर्यत इत्यासो यजमानः । तादृशोऽहं ते तवाऽऽसमन्ताद्वषट् कृणोमि हविर्दानं करोमि । शिपिषु पशुषु विष्टः प्रविष्टो यज्ञः शिपिविष्टः पशुसाध्यो यज्ञ इत्यर्थः । 'यज्ञो वै विष्णुः पशवः शिपिः' इति श्रुतेः । हे शिपिविष्ट यज्ञात्मक विष्णो मे मदीयं तद्धव्यं जुषस्व । सुष्टुतयः शोभनस्तुतिरूपा मे गिरस्त्वां वर्धन्तु वृद्धिं प्रापयन्तु । एकस्मिन्नपि विष्णौ यूयमिति पूजार्थे बहुवचनम् । पूज्या यूयं स्वस्तिभिः श्रेयोभिर्नोऽस्मान्सदा पात रक्षत ।

इति तैत्तिरीयप्रातःसंध्याभाष्यम् ।

## अथ तैत्तिरीयमध्याह्नसंध्याभाष्यम् ।

---

माध्याह्निकसंध्यानुष्ठानाभिमन्त्रितजलपानार्थं मन्त्रमाह—आपः पुनन्त्विति । [ तै० आ० प्र० १० अ० ३० ] या आपः सन्ति ताः पृथिवीं पुनन्तु प्रक्षालनेन शोधयन्तु । सा च पृथिवी पूता शुद्धा सती मामनुष्ठातारं पुनातु शोधयतु । तथा ब्रह्मणो वेदस्य पतिः प्रतिपालकमाचार्यमेता आपः पुनन्तु । तेनाऽऽचार्येणोपदिष्टं ब्रह्म वेदस्वरूपं पूता स्वयं पूतं सन्मां पुनातु । अन्यभुक्तावशिष्टरूपमुच्छिष्टं यदस्ति यच्चाभोज्यं भोक्तुमयोग्यं तादृशं कदाचिन्मया भुक्तम् । यद्वा दुश्चरितमन्यदपि प्रतिषिद्धाचरणरूपं मम किंचित्संपन्नं तत्सर्वं परित्यक्त्येति शेषः । ततो मामापः पुनन्तु । तथाऽसतां शूद्रादीनां प्रतिग्रहं च मया कृतं पुनन्तु, तदर्थमिदमभिमन्त्रितमुदकं स्वाहा मदीयवक्त्राग्नौ हुतमस्तु ।

दधिक्राव्णो अकारिषमित्यादि व्याख्यातमेव ।

अथोपस्थानम्—उद्वयमिति [ तै० सं० का० ४ प्र० १ अ० ७ ] । वयं तमस उत्तरं ज्योतिस्तमसो विनाशकत्वेनोत्कृष्टमग्निसंबन्धि ज्योतिरुत्परिपश्यन्त उत्कर्षेण सर्वतोऽवलोकयन्तो देवत्रा देवेषु मध्ये सूर्यं देवं सूर्यरूपेण वर्तमानमग्निसंबद्धमेवोत्तमं ज्योतिरगन्म प्राप्ताः स्मः ।

उदु त्यमिति [ तै० सं० का० १ प्र० ४ अ० ४३ ] । केतवः प्रज्ञापकाः सूर्यरश्मयः, जातो वेदो ज्ञानं यस्मात्तं जातवेदसं देवं प्रकाशमानं त्यं तं प्रसिद्धं सूर्यं विश्वाय सर्वलोकस्य दृशे दर्शनार्थमुद्वहन्ति ऊर्ध्वं वहन्ति । उकारोऽनर्थकः । ‘ मिताक्षरेष्वनर्थकाः कमीमिद्विति ’ इति यास्कोक्तेः ।

चित्रं देवानामिति [ तै० सं० का० १ प्र० ४ अ० ४३ ] । मित्रादित्रयोपलक्षितस्य जगतो जङ्गमस्य तस्थुषः स्थावरस्याऽऽत्मा स्वरूपभूतः सूर्यः । द्यावापृथिवी स्वर्गभूमी । दिवो द्यावेति द्यावादेशः । अन्तरिक्षं चाऽऽप्राः समन्तादपूरयत् ।

तच्चक्षुरिति [ तै० आ० प्र० ४ अ० ४२ ] । चक्षुरुक्तार्थम् । देवहितं देवानां हितं यस्मात् । सूर्यमण्डलदर्शने सति बहुलकर्मानुष्ठानप्रवृत्त्या देवानां हितं भवति । शुक्रं निर्मलम् । तत्प्रसिद्धं सूर्यमण्डलं वयं शतं शरदः, अत्यन्तसंयोगे द्वितीया । पश्येम । अन्यत्स्पष्टम् ।

---

## अथ तैत्तिरीयसायंसंध्याभाष्यम् ।

---

सायंसंध्याकाले जलपानार्थं मन्त्रमाह—अग्निश्चेति [ तै० आ० प्र० १० अ० ३१ ]। योऽयमग्निरस्ति यश्च मन्युः क्रोधाभिमानी देवः । ये च मन्युपतयः क्रोधस्वामिनस्तस्मिन्नियामका देवाः सन्ति ते सर्वेऽपि मन्युकृतेभ्यो मदीयकोपनिष्पादितेभ्यः पापेभ्यो रक्षन्तां पापिनं मां तत्पापविनाशनेन पालयन्तु । किंचातीतेनाह्ना तस्मिन्नहनि यत्पापमकार्षं कृतवानस्मि । केन साधनेन, मनआदिभिः शिश्नान्तावयवैः । तत्सर्वं पापमहरवलुम्पतु अहरभिमानी देवो विनाशयतु । परहिंसादिचिन्तनं मानसं पापम् । अनृतादिभाषणं वाचिकम् । अभिचारहोमादिकं हस्तकृतम् । पादेन गोब्राह्मणस्पर्शादिकं पादकृतम् । अभोज्यभोजनमुदरकृतम् । अगम्यागमनं शिश्नकृतम् । अथवा किमनेन परिमितगणनेन यत्किमपि दुरितं मयि निष्पन्नमिदं पापजातं सर्वं तत्कर्तारं मां च लिङ्गशरीररूपममृतयोनौ मरणरहिते जगत्कारणे सत्ये बाधरहिते ज्योतिषि स्वयंप्रकाशे वस्तुनि जुहोमि प्रक्षिपाम्यहमनेन होमेन तत्सर्वं भस्मी करोमि । तदर्थमभिमन्त्रितं जलं स्वाहा मदीयमुखाग्नौ सुहुतमस्तु ॥

सायंसंध्योपस्थानम्—इमं म इति ( तै० सं० का० २ प्र० १ अ० ११ )। हे वरुण मे मदीयमिमं हवमाह्वानं श्रुधि शृणु । श्रुत्वा चाद्यास्मान्मृडय सुखय । अवस्युः पालनेच्छुस्त्वामाचके, आ समन्ताच्छब्दयामि प्रार्थये ।

तत्त्वा यामीति ( तै० सं० का० २ प्र० १ अ० ११ ) । तत्तस्मै वरुणाय ब्रह्मणा मन्त्रेण वन्दमानस्त्वा यामि त्वां प्राप्नोमि । अयं यजमानो हविर्भिराराध्य त्वद्रक्षणमाशास्ते हे वरुणाहेडमानः क्रोधरहित इह कर्मणि बोधि अस्मद्विज्ञापनां बुध्यस्व । हे उरुशंस प्रभूतस्तुत नोऽस्माकमायुर्मा प्रमोषीर्मा विनाशय ।

त्वं नो॑ अग्ने॒ वरु॑णस्य वि॒द्वान्दे॒वस्य॒ हेडोऽव॑या-
सिसीष्ठाः । यजि॑ष्ठो॒ वह्नि॑तमः॒ शोशु॑चानो॒
विश्वा॒ द्वेषां॑सि॒ प्रमु॑मुग्ध्य॒स्मत् ।

( तै० सं० का० २ प्र० ५ अ० १२ )

त्वं नो अग्न इति । हेऽग्ने त्वं नोऽस्माकं भक्तिं विद्वान्सन्वरुणस्य देवस्य हेडोऽस्मद्विषयं क्रोधमवयासिसीष्ठा अपनय । यजिष्ठो यष्टृतमोऽतिशयेन यागनिष्पादकः, वह्नितमोऽतिशयेन देवहविर्वोढा, शोशुचानोऽत्यन्तं दीप्यमानः, विश्वा द्वेषांसि सर्वान्विरोधिकृतान्द्वेषानस्मत्प्रमुमुग्धि अस्मत्तः प्रमोचय ।

स त्वं नो॑ अग्नेऽव॒मो भ॑वो॒ती नेदि॑ष्ठो अ॒स्या
उ॒ष॒सो॒ व्यु॑ष्टौ । अव॑ यक्ष्व नो॒ वरु॑णः॒ ररा॑णो
वी॒हि मृ॑डी॒कः॒ सु॒हवो॑ न एधि ।

(तै० सं० का० २ प्र० ५ अ० १२)

स त्वं नो अग्न इति । हेऽग्ने स त्वं नोऽस्माकमूत्या रक्षणेनावमो रक्षको भव । कीदृशस्त्वम्, अस्या उषसो व्युष्टौ नेदिष्ठः, अद्यतनस्योषःकालस्योपरितने प्रातःकालेऽत्यन्तं प्रत्यासन्नः । नोऽस्माकं वरुणं वरुणेन कृतमभीष्टनिवारकं पापादिकमवयक्ष्व नाशय । रराणो रममाणः सन्मृडीकं सुखसाधनमस्मदीयं हविर्वीहि भक्षय । ततो नोऽस्माकं सुहव एधि सुखेनाऽऽह्वातुं शक्यो भव ।

यच्चिद्धि ते विश इति प्रातःसंध्यायां व्याख्यातमेव ।

इति तैत्तिरीयसायंसंध्याभाष्यम् ।

इति तैत्तिरीयसंध्याभाष्यं समाप्तम् ।